ति प्रतिवीवृने इन्धत आकृतानिति मन्त्रे तु प्रतिविन्ना कितव इति व्याख्यातम् । श्वन्नुक्षन् ॥ कनिप्रत्ययान्ता इति । नायं निदिति भावः । एतच्च हलन्तशब्दप्रकरणे मघवन्शब्दे व्युत्पादितम् । केचित्तु नित्यं स्वीकृत्योक्षन्नादीनां सौत्रमन्तोदात्तनिपातनमाहुः । तद्गौरवादुपेक्षितम् । वेति । इकारलोपो निपात्यते । पूषेति । पूष वृद्धौ । क्लिबौषधिशशाङ्कयोरिति यादवः । मूर्द्धेति । मूर्द्धा ना मस्तको ऽस्त्रियामित्यमरः । मज्जेति । टाबन्तो ऽप्ययम् । उष्मया सार्द्धमुष्मापि मज्जोक्तो मज्जया सहेति द्विरूपकोशात् । अर्यमा तु पुमान् सूर्ये पितृदेवान्तरे ऽपि चेति मेदिनी । परिज्मसइत्यादि । एतच्च दशपाद्यादिवृत्त्यनुरोधेनोक्तम् । परिज्मानं सुखं रथमिति मन्त्रस्य वेदभाष्ये तु परिज्मा परितो गन्ता । अजेः परिपूर्वस्य श्वन्नुक्षन्नित्यादिना मन्प्रत्ययः । अकारलोपः । आद्युदात्तत्वं च निपात्यतइत्युक्तम् । उज्ज्वलदत्तस्तु परिज्वेति पठित्वा ज्ञु इति सौत्रो धातुः परिपूर्वः । यणादेशः । परिज्वा चन्द्र इत्याह । तल्लक्ष्यविरोधादुपेक्ष्यम् । मातरिश्वेति । सप्तम्या अलुक् उदात्तत्वञ्च निपात्यते । इह मत्वविषये संप्रसारणं भवति । श्वयुवेति सूत्रे ऽभिव्यक्ततरत्वेन कुक्कुरवाचकस्यैव श्वशब्दस्य च ग्रहणम् । इह सूत्रान्तइतिशब्द आद्यर्थः । तेनान्येभ्योऽपि यथादर्शनकनिः । दशपाद्यान्तु इतिशब्दो न पठ्यते । इत्युणादिषु प्रथमः पादः ॥

कृहृभ्याम् ॥ करेणुरिभ्यां स्त्री नेभे इत्यमरः । करेणुर्गजयोषायां स्त्रियां पुंसि मतङ्गजइति मेदिनी । गन्धेति । कलापश्चेति बोद्ध्यम् । कलापस्तु सतीनकः । हरेणुः खण्डके चास्त्रियामिति वैश्यवर्गे ऽमरः । हरेणुर्ना सतीने स्त्री रेणुका कुलयोषितोरिति मेदिनीविश्वप्रकाशौ । कुष्ठं रोगे सुगन्धे चेति विश्वः । नीथे नीथे मघवानं सुतास इति मन्त्रे नीथशब्दस्यान्तोदात्तत्वं बाहुलकात् । नीथे नीथे स्तोत्रे इति वेदभाष्यम् । रथः पुमानवयवे स्यन्दने वेतसे ऽपि चेति मेदिनी । रथः स्यात्स्यन्दने काये चरणे वेतसे ऽपि चेति विश्वः । काष्ठा दारुहरिद्रायाङ्कालमानप्रकर्षयोः । स्थानमात्रे दिशि च स्त्री दारुणि स्यान्नपुंसकमिति मेदिनी । उषिकुषि ॥ कोष्ठः

निद्रुत्तिका । विधाराख्या ॥ इति उणादिषु प्रथमः पादः ॥

नेभे इति । इभः पुमानित्यर्थः । कालमानेति । अष्टादशनिमेषाः काष्ठाः ।

कुसूले चात्मीये मध्ये कुक्षेर्गृहस्य च । गाथा श्लोके संस्कृतान्यभाषायां शेषवृत्तयोरिति मेदिनी । अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिष्वित्यमरः। अर्थो विषयार्थनयोर्द्धर्मकारणवस्तुषु । अभिधेये च शब्दानां निवृत्तौ च प्रयोजने इति मेदिनी । शोथः श्वयथुः । शु गतौ । सर्त्तेर्णित् ॥ सार्थो वणिक्समूहे स्यादिति सङ्घातमात्रके इति मेदिनीविश्वप्रकाशौ । जूवृत्रू ॥ जरूथो ऽसुरविशेष इति वेदभाष्यम् । वरूथं स्यात्तनुत्राणे रथगोपनवेश्मनोरिति हेमचन्द्रः । वरूथो रथगुप्तौ स्याद् वरूथं रथवेश्मनोरिति विश्वः । पातॄ ॥ तुत्थो ग्रावाञ्जने तु स्यान्नीलीसूक्ष्मतयोरपीति विश्वः । तुत्थमञ्जनभेदे स्यात् नीलीसूक्ष्मतयोः स्त्रियाम् । सिक्थो भक्तपुलाके ना मधूच्छिष्टे नपुंसकमिति मेदिनी । अत्तानिरिद्रोघवाचस्ते निर्ऋथं सचन्तामिति मन्त्रे निर्ऋथो हिंसेति वेदभाष्यम् । निशीथस्तु पुमानर्द्धरात्रे स्याद्रात्रिमात्रके इति मेदिनी । प्रातित्यश्चारुमध्वरमिति मन्त्रे गोपीथः सोमपानमिति वेदभाष्यम् । यास्को ऽप्येवम् । तीर्थमिति तु वृत्तिकाराः । अवगथ इति । गाङो ह्रस्वत्वं निपातनात् । समीणः ॥ समिथशब्दः सङ्ग्रामपर्यायेषु वैदिकनिघण्टौ पठितः । श्रिये जात इति मन्त्रे समिथा युद्धानीति वेदभाष्यम् । युक्तश्चैतत् । सम्यगेति जयाय मन्त्रे इति व्युत्पत्तेः । संपूर्वस्य इणः क्विबाद्यन्तस्य लोके ऽपि युद्धार्थत्वदर्शनाच्च । उक्तं ह्यमरेण समित्याजिसमिद्युधः । तिथं पृष्ठम् । पृषु सेचने । पृष्ठन्तु चरमन्तनोरित्यमरः । पृष्ठमरममात्रे ऽपि देहस्यावयवान्तरे इति मेदिनी । स्तोत्रविशेषो ऽपि पृष्ठम् । चित्राधिकरणे पृष्ठैः स्तुवतइत्यादौ तथापि निर्णयात् । गूथमिति । गु पुरीषोत्सर्गे । निपातनाद्दीर्घः । एवं यूथे ऽपि । यूथन्तिर्यक्समूहे स्त्री पुष्पभेदे च योषितीति मेदिनी । यूथी पुष्पप्रभेदे स्यात् मागध्याञ्च करेणुके । यूथन्तिर्यक्समूहे ऽपि वृन्दमात्रे ऽपि भाषितमिति विश्वः । प्रुङ् गतौ । निपातनाद् गुणः । प्रोथो ऽस्त्री हयघोणायां ना कट्यामध्वगे त्रिष्विति मेदिनी । स्फायितञ्चि ॥ द्वात्रिंशत इति । दशपाद्यान्तु त्रयस्त्रिंशदुक्ताः। दम्भिवञ्चीति पठित्वा वह प्रापणे । उदः । अनड्वानित्युदाहरणात् । माधवो ऽप्येवम् । स्फारमिति । नेदृवशीति नेद् । वलि यलोपः । स्फारः स्यात्पुंसि विकटे करकादेश्च बुद्बुदे इति मेदिनी । तक्रमिति । तञ्चू सङ्कोचे । वक्रः स्याज्जटिले क्रूरे पुटभेदे शनैश्चरे इति विश्वः । वक्रः शनै-

भरे पुंसि पुटभेदे नपुंसकम् । शक्रः पुमान् देवराजे कुटजार्जुनभूरुहोरिति मेदिनी । क्षुद्र इति । क्षुदिर् संपेषणे । क्षुद्रः स्यादधमक्रूरकृपणाल्पेषु वाच्यवत् । क्षुद्रा व्यङ्गानटीकण्टकारिकासरघासु च । चाङ्गेरीवेश्ययोर्हिंस्रामक्षिकामात्रयोरपीति मेदिनी । तृमः पुरोडाश इति । न तृप्रा उरुव्यंस इति मन्त्रे वेदे भाष्यकारैः प्रकृतसूत्रे उज्ज्वलदत्तादिभिश्चेत्थं व्याख्यातम् । दशपाद्यीवृत्तौ तु तृपमाजाक्वाष्टश्चेत्युक्तम् । तृमन्दुःखमिति मुग्धधातुवृत्तौ माधवः । हिमांशुरित्यादि शब्दार्णवः । दस्यति रोगान् क्षिपति दस्रः । दस्रः खरे ऽश्विनीसुते इति मेदिनी । दस्रः खरे चाश्विनयोरिति विश्वः । भूयोऽभिप्रायेति । माधवस्तु वृत्तिस्वरसमनुरुद्ध्य अविन्द उस्रिया इति मन्त्रे बाहुलकात् षत्वं नेति व्याचष्टे । उस्रो वृषे च किरणे ऽपिस्रार्जुन्युपचित्रयोरिति मेदिनी । उस्रा गव्युपचित्रायामुस्रन्तु किरणो स्मृत इति विश्वः । वासो ना दिवसे क्लीबं मन्दिरे च चतुष्पथे इति मेदिनी । वास्रो रासभपक्षिणोरित्येके । माधवस्तु वाश्रेव विद्युन्मिमातीति मन्त्रे शब्दयुक्ता प्रस्रुतस्तना धेनुर्वाश्रेति व्याख्यत् । शुभ्रं स्यादभ्रके क्लीबमुद्दीप्तं शुक्रयोस्त्रिषु इति मेदिनी । चुक्रमिति । चक तृप्तौ । चुक्रस्त्वम्ले ऽम्लवेतसे । चुक्री चाङ्गेरिकायां स्यात् वृक्षाम्ले चुक्रमिष्यते इति विश्वः । चुक्रं वृक्षाम्ले चाङ्गेर्यां स्त्री पुंस्यम्ले ऽम्लवेतस इति मेदिनी । अर्देर्दीर्घश्च ॥ आर्द्रा नक्षत्रभेदे स्यात् स्त्रियाङ्क्लिन्नेऽभिधेयवद् इति मेदिनी । शुचेर्दश्च ॥ शूद्रो वृषलः । अहहारे त्वाशूद्रेति श्रुतौ तु रूढेर्बाधाद् योग एव पुरस्कृतः । तथा चोत्तरतन्त्रे भगवता व्यासेन सूत्रितम् । शुगस्य तदनादरश्रवणादिति । कृतेः ॥ अन्त्यस्य च्छः क्रू तु सर्वस्य । अनेकान्तत्वात् । कृच्छ्रमाख्यानमामीले पापसान्तपनादिनोरिति विश्वमेदिन्यौ क्रूरस्तु कठिने घोरे नृशंसे चाभिधेयवदिति च । बहुलमन्यत्रापि । सञ्ज्ञायां बृंहयति वर्द्धयति प्रजाः ब्रह्मा । शं सुखं भावयति शम्भुः । शोषयति शुष्मेत्यादि । छन्दसि, वर्द्धन्तु त्वा सुष्टुतयः । यइमं जजान । बाहुलकादसञ्ज्ञाछन्दसोरपि क्व चिदित्याशयेनोदाहरति वान्तीत्यादि । जोरी च ॥ जीरः

पुटभेदो ऽधस्तनजलस्याकस्मादुपरि निर्गमः । उपचित्रा । मूषकपर्णी । क्लिन्ने जलार्द्रे । शुगस्येति । शुचं रातीति शूद्रः । आतो ऽनुपसर्गेइति कः । पृषोदरादित्वाद्वर्णव्यत्यय इति भावः । आमीलं दुःखम् । सान्तपनादि । प्रायश्चित्तार्थे-

खड्गे वणिग्द्रव्ये इति विश्वः । जीरस्तु जरणे सङ्गे इति मेदिनी । ज्यश्चेति । तथा च, न धातुलोपे इति सूत्रे जीवेरदानुरित्यस्य प्रत्याख्यानार्थं नैतज्जीवे रूपंकिं तु रकि ज्यः संप्रसारणमिति भाष्ये उक्तम् ॥ सुमू ॥ सुरा चषकम-द्ययोः । पुल्लिङ्गस्त्रिदिवेशे स्यादिति मेदिनी । सुरो देवे सुरा मद्ये चषके ऽपि सुरा क्व चिदिति विश्वः । सुवति प्रेरयति कर्मणि लोकमिति सूरः । सूर्यः । धीरो धैर्यान्विते स्वैरे बुधे क्लीबन्तु कुङ्कुमे । स्त्रियां श्रवणतुल्या-यामिति मेदिनी । गृध्रः खगान्तरे पुंसि वाच्यलिङ्गो ऽर्थलुब्धके इति च । श्रुरिति तालव्यादिर्गत्यर्थ ।शूरः स्याद् यादवे भटे इति मेदिनी। शूरश्चारुभटे सूर्ये इति विश्वहेमचन्द्रौ । शूरः सूरश्च तरणाविति द्विरूपेषु विश्वः । सीरो ऽर्कहलयोः पुंसि चीरी झिल्ल्यां नपुंसकम् । गोस्तने वस्त्रभेदे च रेखालेखनभे-दयोरिति मेदिनी । चीरन्तु गोस्तने वस्त्रे चूडायां सीसके ऽपि च। चिरी कुचन्द्रादिकाझिल्योरिति विश्वः । वाविन्धे ॥ वीध्रन्तु विमलार्थकमिति विशे-ष्यनिघ्नेष्वमरः । वप्रः पितरि केदारे वप्रः प्राकाररोधसोरिति धरणिरन्ति-देवौ ॥ वप्रस्ताते पुमानस्त्री वेणुक्षेत्रचये तटे इति मेदिनी। ऋजेन्द्र ॥ ऋज ग-त्यादिषु । ऋज्राश्वः प्रष्टिभिरम्बरीष इति मन्त्रे ऋज्रागतिमन्तो ऽश्वा यस्य स ऋज्राश्व इति वेदभाष्यम् । शचीपतावन्तरात्मन्यादिस्इति विश्वः । अग्रं पुरस्तादुपरि परिमाणे पलस्य च । आलम्बने समूहे च प्रान्ते च स्यान्नपुंस-कम् । अधिके च प्रधाने च प्रथमे चाभिधेयवदिति मेदिनी । क्षुरः स्याच्छे-दनद्रव्ये कोकिलाक्षे च गोक्षुरे इति विश्वमेदिन्यौ । खुरः कोलदले शफे । भद्रः शिवे खञ्जरीटवृषभेरुकदम्बके । करिजातिविशेषे ना क्लीबं मङ्गलमु-स्तयोः । काञ्चने च स्त्रियां रास्नाकृष्णाव्योमनदीषु च । तिथिभेदे प्रसारि-ण्याङ्कुरफलानन्तयोरपि । त्रिषु श्रेष्ठे च साधौ च न पुंसि करणान्तरे । उग्रः शूद्रासुते क्षत्राद्रुद्रे पुंसि त्रिपूत्कटे । स्त्री वचाक्षुद्रयोरिति मेदिनी। भेदः प्लवे भीरुके च निर्बुद्धमुनिभेदयोरिति विश्वः । भेलः प्लवे मणौ पुंसि भीरावज्ञे च वाच्यवत । शुक्रः स्याद्भार्गवे ज्येष्ठे मासे वैश्वानरे पुमान् । रेतोक्षिरु-ग्भिदोः क्लीबं शुक्लो योगान्तरे सिते । नपुंसकन्तु रजते । गौरः पीते ऽरुणे

---

घूनम् । नृशंसो घातुकः । चषकः । सुरापानपात्रम् । चीरी । खिकटदेशप्रसिद्धं-पक्षम् । क्षेत्रचये । क्षेत्ररक्षणार्थे कुड्ये । कोकिलाक्षस्तालमखाणा । कोलौ बदरी । कृष्णा पिप्पली ।

श्वेते विशद्धे ऽप्यभिधेयवत् । ना श्वेतसर्षपे चन्द्रे न द्वयोः पद्मकेसरे । गौरी त्वसञ्जातरजःकन्याशङ्करभार्ययोः । रोचना रजनीपिङ्गाप्रियङ्गुवसुधासु च । आपगाया विशेषे ऽपि यादसां पतियोषितीति इति मेदिनी । नदीभेदे च गौरी स्याद्वरुणस्य च योषितीति विश्वः । अष्टवर्षातु या दत्ता श्रुतशीलसमन्विते । सा गौरी तत्सुतो यस्तु स गौरः परिकीर्त्तित इति ब्रह्माण्डवचनं श्राद्धकाण्डे हेमाद्रिणा उदाहृतम् । एतेन गौरः शुच्याचार इति भाष्ये व्याख्यातम् ।इरा भूवाक्सुराप्सु चेति मेदिनी । मालङ्क्षेत्रे जने मालो मालापुष्पादिदामनीति मेदिनी । मालमुन्नतभूतलमित्युत्पलः । क्षेत्रमारुह्य मालमिति मेघदूतः । मणिपूर्वोऽयमर्थान्तरे ऽपि रूढः । मणिमाला स्मृता हारे स्त्रीणान्दन्तक्षतान्तरे इति विश्वः । बाहुलकात् तिज निशाने रन् दीर्घत्वञ्चास्य वः । तीव्रा तु कटुरोहिण्यां राजिकागण्डदूर्वयोः ॥ त्रिष्वत्युष्णे नितान्ते च कटौ इति मेदिनी । समिं कसः ॥ सङ्कसुको ऽस्थिर इति विशेष्यनिघ्ने अमरः । क्वन् ॥ अपूर्वस्य निरुपपदस्य अपिशब्दात्सोपपदस्य अर्थद्वारकसम्बन्धे षष्ठी प्रकृतिप्रत्ययार्थयोः क्रियाकारकभावात् । रजको धावके शुके इति विश्वः । रजकौ धावकशुकाविति हेमचन्द्रः । कुट्ट च्छेदने । इक्षून् कुट्टयति इक्षुकुट्टको गौडिकः । चषको ऽस्त्री सुरापात्रे मद्यमाद्यप्रभेदयोरिति मेदिनी । लमको ऋषिविशेषः । कृष ॥ कर्षकः कृषीवलः । कृषकः स एव । कृषकः पुंसि फाले स्यात् कर्षके त्वभिधेयवद् इति मेदिनी । स्त्री कुशी कुशिकः फालइति रत्नकोशः । उदकञ्च उन्दीक्लेदने । ननु क्वुन् शिल्पीत्यादिना गतार्थमिदमत आह । प्रपञ्चेति । प्राङि ॥ सङ्घात उपपदम् । आङि पणि ॥ नन्वनेनैव सिद्धे प्राङीत्यत्र परिग्रहणं व्यर्थमिति चेन्न । उपसर्गान्तरनिवृत्त्यर्थत्वात् । आपणिक इति । वणिक् नित्स्वरेणाद्युदात्तः । आपणेन व्यवहरतीत्यर्थे ठकि तु कित इत्यन्तोदात्तः । श्यास्त्या ॥ श्येनः पत्रिणि पाण्डुरे इति मेदिनी । स्तेनश्चोरः । स्तेन चौर्ये इति चौरादिकात्पचाद्यचि तु निर्यकारो ऽपि । केचित्तु स्तायूनां पतये इत्यादिप्रयोगोपष्टम्भेन निर्यकारस्यापि ष्टैधातोर्भ्वादिषु माधवादिभिः स्वीकृतत्वात् प्रकृतसूत्रे ऽपि तमेव पठन्तः स्तेनशब्दो निर्यकार एवेत्याहुः । हरिणः पुंसि सारङ्गे विशदे त्वभिधेयवत् । हरिणी हरितायाञ्च

---

रोचना गोरोचनाख्ये ॥ नितान्ते । अतिशये । व्यवहरतीत्यर्थं इति ।

नारीभिद्वृत्तभेदयोः। सुवर्णप्रतिमायाञ्चेति मेदिनी। वृजेः किच्च॥ वृजिनं कल्मषे क्लीबङ्क्लेशे ना कुटिले ऽन्यवदिति मेदिनी। अजिनञ्चर्म कृत्तिः स्त्रीसमरः। कठिनमिति। कठ कृच्छ्रजीवने। कठिनमपि निष्ठुरे स्यात् स्तब्धे तु नपुंसके स्थाल्याम्। कठिनी खटिकायामपि कठिना गुडशर्करायाञ्चेति मेदिनी। मल मल्ल धारणे। मलिनन्दूषिते कृष्णे ऋतुमत्यान्तु योषिति इति मेदिनी। कुण्डिनमिति। नगरङ्कुण्डिनमण्डजो ययाविति श्रीहर्षः। कुण्डिन ऋषिः। यस्यापत्यङ्कौण्डिन्यः। परुषि पर्वणि दिनं खण्डितमिति तैत्तिरीयश्रुत्यर्थः। द्रुदक्षिभ्याम्॥ द्रु गतौ। दक्ष वृद्धौ। द्रविणं न द्वयोर्वित्ते काञ्चने च पराक्रमे। दक्षिणा दक्षिणोद्भूतसरलच्छन्दवर्त्तिषु। अवामे त्रिषु यज्ञादिविधिदाने दिशि स्त्रियामिति मेदिनी। दक्षिणः सरलोदारपरच्छन्दानुवर्त्तिषु। वाच्यवद्दक्षिणावाची यज्ञदानप्रतिष्ठयोरिति विश्वः। अर्त्तेः॥ इरिणं शून्यमूषरमित्यमरः। इरिणन्तु खरे शून्ये ऽपीति मेदिनी। तुहिनमिति। तुहिर् अर्दने। लघूपधगुणे कृते ह्रस्वः। तलिपुलिभ्याञ्च॥ तल प्रतिष्ठायाम्। पुल महत्त्वे। तलिनं विरले स्तोके स्वच्छे ऽपि वाच्यलिङ्गकमिति मेदिनी। महेः॥ कुतस्त्वमिन्द्र माहिन सन्निति मन्त्रे माहिनो महनीयः पूजनीय इति वेदभाष्यम्॥

क्विब्वचि॥ पृच्छतीति प्राट्। च्छ्वोः शूडिति शः। प्राशौ।प्राशः। श्रीरिति। कृदिकारादिति ङीष् तु न। कृत्प्रत्ययो य इकार इति व्याख्यानात्। कृदन्तं यदिकारान्तमिति पक्षेऽपि कारग्रहणे तत्सामर्थ्यादेव केवलग्रहणात्। दुर्घटस्तु ङीपि श्रीमित्यपि रक्षिते इच्छतीत्याह। श्रीर्वेशरचना शोभा भारती सरलद्रुमे। लक्ष्म्यान्त्रिवर्गसंपत्तिविधोपकरणेषु च। विभूतौ च मतौ च स्त्रीति मेदिनी। जूराकाशेसादि मूलोदाहृतञ्च। द्रुवः॥ चात् क्विपूदीर्घौ। स्रुवः कः॥ स्रु गतौ। स्रुवो यज्ञपात्रविशेषः। अयं स्रुवो

तेन दीव्यतीति सूत्रेणेत्यर्थः। स्तब्धो ऽनम्रः। यस्यापत्यमिति। यस्य कुण्डिनस्य वाचकान्नान्तकुण्डिन्शब्दात् ङीपि तस्या अपत्यमित्यर्थः। कुण्डिनान्तु यञ् दुर्लभः। कुण्डिनीत्येव गर्गादौ पाठात्। ध्वनितञ्चेदं भस्याढइति वार्तिके भाष्ये।

केवलग्रहणादिति। उच्चरितसमकालग्रहणादित्यर्थः। अयन्तु भाष्य-

ऽभिजिर्हति । स्रुवेण पार्वणौ जुहोतीत्यादौ प्रसिद्धः । चिक ॥ स्रुव इत्ये-व । योगविभाग उत्तरार्थः । तनोतेः ॥ व इति सङ्घातग्रहणम् । तदाह । वशब्देति । स्त्रियान्तु त्वगस्रग्धरेत्यमरः । केशत्रोक्तमाह । गौर्नेत्यादि । गौः स्वर्गे च बलीवर्दे रश्मौ च कुलिशे पुमान् । स्त्री सौरभेयीदृग्बाणदिग्वा-ग्भूष्वप्सु भूम्नि चेति मेदिनी । द्यौरिति । कर्त्तर्यधिकरणे वा प्रत्ययः । द्योरिति । त्रिलिङ्गोऽयमिति प्रागेवोक्तम् । जसिसहो रुरिन्॥ जसुरयेस्तुर्य्यं पिप्यथुर्गामिति मन्त्रे जसुरये श्रान्ता येति नीचायमानजसुरिं न श्येनमि-त्यत्र जसुरिङ्क्षुधितम् । श्येनन्नश्येनपक्षिणमिवेति । उतस्य वाजी सहुरी-र्ऋतावेति मन्त्रे सहुरिः सहनशील इति च वेदभाष्यम् । सयु ॥ सवनन्त्व-ध्वरे स्नाने सोमनिर्दलने ऽपि चेति मेदिनी । स्वणः शब्दने स्वरे इति च । वरणस्तिक्तशाके ऽपि प्राकारे वरणं वृताविति विश्वः । वरुणे वरणः सेतुस्तिक्तशाकः कुमारक इत्यमरः । अशेरशू च ॥ जिह्वेति । रस आस्वाद-ने । चौरादिकः । ततो नन्द्यादित्वाल्ल्युः । ण्यासश्रन्थेति युज्वा ॥ अथ रसनं स्वादने ध्वनौ । जिह्वायान्तु न पुंसि स्याद् रास्नायां रसना स्त्रिया-मिति मेदिनी । एषा दन्त्यतालव्यद्वयोरर्थव्यवस्था भूरिप्रयोगाभिप्रायेणो-क्ता । वस्तुतस्तु द्वावप्यर्थद्वये साधू । तथा हि । तालव्या अपि दन्त्याश्च शम्बशम्बलशूकराः । रशनापि च जिह्वायामिति विश्वकोशाज्जिह्वायामुभ-यम् । रसनं निस्वने स्वादे रसना काञ्चिजिह्वयोरित्यजयधरणिकोशाभ्यां काञ्च्यामुभयं साधु । रसनं स्वदने वाथ रसना काञ्चिजिह्वयोः । रसन-श्चापि रास्नायाम् । इति विश्वप्रकाशाच्चेति दिक् । एवञ्चेह सूत्रे अशू व्याप्तौ अश भोजने इति धातुद्वयमपि ग्राह्यम् । रस आस्वादने रस शब्दे इति धातुभ्यां बहुलमन्यत्रापीत्यनुपदं वक्ष्यमाणो युच् । तेन सर्वत्रावयवा-र्थानुगमो ऽपि सूपपाद इत्यवधेयम् । उन्देः ॥ ओदनं न स्त्रियां भक्ते बला-यामोदनी स्त्रियामिति मेदिनी । बहुलम् ॥ स्यन्दनन्तु स्रुतौ नीरे तिनिशे ना रथे ऽस्त्रियामिति मेदिनी । रोचना रक्तकह्लारे गोपिनागरयोषितोः ।

वयस्तरिस्तरी इति च तदुदाहरणमिति भावः । इत्यवधेयमिति । वृज्वत्सूत्रभाष्ये तु रशो रशना राशिः । रश्मिरित्युक्तम् । तिनिशो वृक्षविशेषः ।

रोचनः कूटशाल्मल्यां पुंसि स्याद्रोचके त्रिष्विति च । चदि आ ह्लादने । चन्दनं मलयोद्भवे । चन्दनः कपिभेदे स्यान्नदीभेदे तु चन्दनीति विश्वः । चन्दनी तु नदीभेदे । चन्दनो ऽस्त्री मलयजे भद्रकाल्यां नपुंसकम् । इति मेदिनी । भद्रकाली औषधिविशेषः । भद्रकाली तु गन्धोल्याङ्कात्यायन्यामपि स्त्रियामिति मेदिनी । असु क्षेपणे । असन्तक्षेपणे क्लीबं पुंसि स्याज्जीवकद्रुमे इति मेदिनी । अत सातत्यगमने । राजपूर्वः । राजातनः क्षीरिकायां प्रियाले किंशुके ऽपि चेति विश्वमेदिन्यौ । एवमन्ये ऽपि द्रष्टव्याः । रञ्जेः क्युन् । बाहुलकात्कृपेरपि । लत्वाभावश्च । कृपणः । भूमू ॥ बहुलवचनाद्भाषायामपि । भुवनं विष्टपे ऽपि स्यात्सलिले गगने जने इति मेदिनी । कृङ्‌ ॥ निधनं स्यात्कुले नाशे इति मेदिनी । निधनङ्कुलनाशयोरिति हेमचन्द्रः । धृषेः ॥ धिषणस्त्रिदशाचार्ये धिषणाधीयोषिति इति मेदिनी । वर्त्तमाने ॥ पृषन्मृगे पुमान् बिन्दौ न द्वयोः पृषतोऽपि ना । अनयोश्च त्रिषु श्वेतबिन्दुयुक्ते ऽप्युभाविमौ इति मेदिनी । बृहती क्षुद्रवार्त्ताक्यां कण्टकार्यांश्च वाचि ना । वारिधान्यां महत्याञ्च छन्दोवसनभेदयोरिति विश्वः । शतृवद्भावादुगिदचामिति नुम् । बृहन्विपुलः । महती वल्लकीभेदे राज्ये तु स्यान्नपुंसकम् । तत्त्वभेदे पुमान् श्रेष्ठ वाच्यवदिति मेदिनी । महती नारदी वीणा । अवेक्षमाणं महतीं मुहुर्मुहुरिति माघः । जगत्स्याद्विष्टपे क्लीबं वायौ ना जङ्गमे त्रिषु । जगती भुवने क्ष्मायां छन्दोभेदे जने ऽपि चेति मेदिनी । तत्र वायुवाचिनः पुँल्लिङ्गस्य नुमि जगन् जगन्तौ जगन्त इत्यादि । ध्युगमिजुहोतीनान्द्वे चेति व्युत्पादितस्य तु नुमभावात् जगत् जगतावित्यादि । मश्चिनोतेरिति । सुभूतिचन्द्रस्तु संपूर्वाच्छृणातेः संस्वदित्याह । तृपत् छत्रमिति । चन्द्रमा इत्यन्ये । पिब मध्वस्तृपदिन्द्रावृषस्वेति मन्त्रे तु तृपच्छन्दो यौगिकः । तृप्यान्नित्यर्थः । वेदभाष्ये तु तौदादिकात् तृपतेः शतृप्रत्यये आगमशास्त्रस्यानित्यत्वान्नुमभाव इत्युक्तम् । तस्मौढित्वाद्वमात्रम् । एतेन त्वमस्य ब्राह्मणादातृपदिपिचेत्यादि मन्त्रान्तरं व्याख्यातम् । गौरित्यनुवृत्तौ वेहद्गर्भोपघातिनीत्यमरः । छन्दस्यसानच् ॥ ऋ गतौ । जॄष् वयोहानौ । एतेन ऋणन्महे इत्यादिमन्त्रद्वयेऽपि ऋवसानशब्दस्य

---

कूटशाल्मल्याम् । यमद्रुमस्थशाल्मल्याम् ॥ जीवद्रुमो विजयसारः ।

गन्तृपरतया सौत्रे बाहुलकोपष्टम्भेन क्लिष्टव्याख्यानं नातीवादर्त्तव्यम् । ऋजिश्वा ॥ ऋजि भर्जने । इदित्त्वान्नुम् । तत एव नलोपाभावः । एवञ्च अयं मन्दिसही च पूर्वसूत्र एव पठितुं योग्याः । किच्चन्तु वृद्धावेवोपयुज्यते । उत्तरसूत्रेऽपि गणग्रहणं सुत्यजम् । अर्त्तेः शद्धः, वृधेः किदित्युक्तौ सर्वेसामञ्जस्यात् । ऋञ्जसानो मेघ इति । ऋञ्जमानः पुरुवार उक्थैः । अस्मिन् मन्दसाना वृषञ्जे वसु इत्यादिमन्त्राणां भाष्ये तु यौगिकार्थ एव पुरस्कृतः । आर्त्तेः ॥ धातोर्गुणः । प्रत्ययस्य सुडागमः । आसात्रिपदर्शसानाय शत्रुमिति मन्त्रस्य भाष्ये अर्शसानाय शत्रूणां हिंसित्रे इति व्याख्यातम् ॥ युधिबुधि ॥ बाहुलकात् कृपेरपि । कृपाणः खड्गः । कृपाणेन कथंकारं कृपणः सह गण्यते । परेपान्दानसमये यः स्वकोशं विमुञ्चति । हुर्छेः ॥ युयोध्यस्मज्जुहुराणमेन इति मन्त्रे जुहुराणं कौटिल्यकारि पापं युयोधि पृथक् कुर्विति भाष्यम् ॥ श्वितेर्दश्च ॥ श्विता वर्णे । अस्मात्सनन्तादानच् सनो लुक् तकारस्य दकारः । किदित्यनुवृत्तेर्न गुणः । पुण्यकर्मेति । स हि उज्ज्वलो भवितुमिच्छति । शिश्विदानो ऽकृष्णकर्मेति विशेष्यनिघ्ने अमरः । अकृष्णं शुक्लं शुद्धमित्यर्थः । इह क्षीरस्वामी प्रकृतसूत्रे विस्मृत्य श्विदि श्वैत्ये अस्माल्लिटः कानजिति व्याख्यत् । तत्तुच्छम् । कानचश्छान्दसत्वात् । इदित्त्वेन नलोपानुपपत्तेश्चेति दिक् । कृष्णकर्मेत्यमरे पाठान्तरम् । पापकर्मेत्यर्थः । तत्रावयवार्थानुगमबलेन बोद्धव्यः । शुद्धो भवितुमिच्छतीत्युक्तो हि इदानीमशुद्ध इति गम्यते । तृन्तृचौ ॥ अप्तृन्निति । अतो ऽत्र दीर्घो नेत्युदाहरति । संस्तारावित्यादि । नित्त्वादाद्युतः । तथा च मन्त्रः । ग्रावग्राभ उत शंस्तासुविप्रः । आदिशब्दात् । शासु अनुशिष्टौ । शास्ति विनयति सत्त्वान् शास्ता बुद्धः शास्तारौ शास्तारः।शास्ता समन्तभद्रे ना शासके पुनरन्यवदिति मेदिनी। प्रपूर्वस्य तु अप्तृन्निति दीर्घः । प्रशास्तारौ प्रशास्तारः । क्षत्ता शूद्राच्च वैश्याजे प्रतीहारे च सारथौ । भुजिष्यातनये ऽपि स्यात् नियुक्तवेधसोः पुमानिति मेदिनी । कोशानुसारेणाह । वैश्यायामिति । अमरस्तु क्षत्रियायाञ्च शूद्रज इत्याह । याज्ञवल्क्यो ऽपि । क्षत्रिया मागधं वैश्यात् शूद्रात् क्षत्तारमेव चेति । इह बहुलमन्यत्रापीति प्रपञ्चार्थत्वाद् उपेक्षितम् । नप्तेति । नञः प्रकृतिभावः । यतेश्छन्दलोपः । त्वष्टा पुमान् देवशिल्पितक्षणोरादित्यभिन्नपीति मेदिनी । जायां मातीत्यन्तर्भावितण्यर्थः । क्षुज्यसेः ॥ असु क्षेपणे । असद्री-

प्सादिषु । आभ्यां स्नुञि उपपदे ऋन् । यतेः ॥ यती प्रयत्ने । नञि च नन्देः ॥ उषाप्यूषा ननन्दा च ननान्दा च प्रकीर्त्तितेति द्विरूपेषु विश्वः । देवेति । भ्रातर इत्यनुवृत्तौ स्वामिनो देवृदेवराविसमरः । देवे धवे देवरि माधवे चेति श्रीहर्षः । नयतेः । स्युः पुमांसः पञ्चजनाः पुरुषाः पुरुषा नरा इत्यमरः । सव्ये ॥ ऋडिच्चेत्यनुवर्त्तते । सव्येष्ठेति । तत्पुरुषे कृतीति सप्तम्या अलुक् । अर्त्तिसृ ॥ धमिः सौत्रः । अरणिर्वह्निमन्थे ना द्वयोर्निर्मन्थदारुणीति मेदिनी । सरणिः श्रेणिवर्त्मनोरिति दन्त्यादौ रभसः । सरणिः पङ्क्तौ मार्गे चेति मेदिनी । शॄ हिंसायाम् । ततः शरणिरित्येके । सरणिरित्येके । शरणिः पथि चाऽऽवलाविति तालव्यादावजयः । इमामग्ने शरणिमिति मन्त्रे शरणिं हिंसां व्रतलोपरूपां मीमृषः क्षमस्वेति वेदभाष्यम् । धमनी तु शिरा हट्टविलासिन्याश्च योषिति । अशनिः स्त्रीपुंसयोः स्याच्चञ्चलायां पवावपि । तरणिर्द्युमणौ पुंसि कुमारीनौकयोः स्त्रियाम् । रजनीनीकिनीरात्रिहरिद्राजतुकासु चेति मेदिनी । कुमारी लताविशेषः । तरणी रामतरणी कर्णिका कारुकेमरा । सहा कुमारी गन्धाढ्येति धन्वन्तरिनिघण्टुः । रञ्जेर्नलोपोऽपि बाहुलकात् । कृपेरादेश्च चः ॥ चर्षणिर्जन इति वैदिकनिघण्टौ चर्षणिशब्दस्य मनुष्यनामसु पाठात् । ओमासश्चर्षणीधृतः प्रचर्षणिभ्यः इत्यादिमन्त्राणां भाष्ये तथैव व्याख्यानाच्च । अत एव आदेश्च ध इति पठित्वा धर्षणी बन्धकीति व्याख्यात् । तथा सति धृषेरित्येव सूत्रयेत् प्रागल्भ्यरूपान्वयवार्थानुगमात् । आदेश्च ध इत्यंशस्य त्यागेन लाघवाच्च ॥ वर्त्तनिरिति । कृदिकारादिति पक्षे ङीप् । सरणिः पद्धतिः पद्या वर्त्तन्येकपदीति चेत्यमरः । क्षिपणिरायुधमिति । उतस्य वाजी क्षिपणिन्तुरण्यपि इति मन्त्रस्य वेदभाष्यम् । क्षिपणिङ्क्षपणमनु तुरण्यति त्वरयति गन्तुमिति व्याख्यातम् । अर्चिरिति सान्तम् । तमर्चिषा स्फूर्जयन्निति मन्त्रः । नयनमिव सनिद्रं घूर्णते नैशमर्चिरिति माघः । ज्वालाभासोर्न पुंस्यर्चिरिति नानार्थे सान्तेष्वमरः । इदन्तोऽपीति । णिजन्तादच इरिति भावः । अर्चिर्हेतिः शिखा स्त्रियामित्यमरः । रोचिः शोचिरुभे क्लीबे इति च । छाद्यते ऽनया च्छदिः । छदिः स्त्रियामेवेति लिङ्गानुशासनसूत्रम् । एवञ्च पटलं छदिरित्यमरग्रन्थे पटलसाहचर्याच्छदिषः क्लीबतां वदन्त उपेक्ष्याः । बृहेः ।

आवलिः पङ्क्तिः ॥

बर्हिः पुंसि हुताशने । न स्त्री कुशे इति मेदिनी । द्युतेः । ज्योतिरग्नौ दिनकरे । पुमान्नपुंसके दृष्टौ स्यान्नक्षत्रप्रकाशयोरिति मेदिनी । वसौ रुचेः ॥ बाहुलकात्केवलादपि । रोचिः शोचिरुभे क्लीबे । अर्त्तिपॄ ॥ वृणो ऽस्त्रियामीर्मम- रुः क्लीबे इत्यमरः । ग्रन्थिर्ना पर्वपरुषी इति च । वपुः क्लीबन्तनुः शस्ताकृतावपीति मेदिनी । तनुः शरीरम् । तनुषे तनुपे ऽनङ्गमिति सुबन्धुः । स्यात्तनुस्तनुषा सार्द्धं धनुषा च धनुं विदुरिति द्विरूपेषु विश्वः । अथास्त्रियान्धनुश्चापाविस्यमरः । धनुः प्रियाले ना न स्त्री राशिभेदे शरासने । धनुर्धरे त्रिष्विति सान्ते मेदिनी । क्षेः ॥ शिस्त्वात्सर्वधातुकत्वे ख्याञ् न । चक्षते रूपमनुभवन्त्यनेनेति चक्षुः । मुहेः ॥ मुहुः पुनः पुनः शश्वद् अभीक्ष्णमसकृत् समाः । इत्यव्ययेष्वमरः । अस्मात्परं बहुलमन्यत्रापीति उस्पष्टत्वात्त्यक्तम् । कृग ॥ नैर्ऋतः कर्बरः क्रव्यात्कर्बुरो यातुरक्षसोरिति शब्दार्णवः । शर्वरी यामिनी स्त्रियोरिति मेदिनी । वर्वरः पामरे केशविन्यासे नीवृदन्तरे । वर्वरः फञ्जिकायान्तु वर्वरा शाकपुष्पयोरिति विश्वः । वर्वरः पामरे केशवल्कले नीवृदन्तरे । फञ्जिकायां पुमान् शाकभेदपुष्पभिदोः स्त्रियामिति मेदिनी । चत्वरं स्थण्डिले ऽङ्गण इति च । नौ सदेः ॥ घरजनुवर्त्तते । सदिरप्रतेरिति षत्वम् । निषद्वरः स्मरे पङ्के निशायान्तु निषद्वरेति मेदिनी ॥ इत्युणादिषु द्वितीयः पादः ॥

छित्वर ॥ छित्वरश्छेदनद्रव्ये धूर्त्ते वैरिणि च त्रिष्विति मेदिनी । डुधाञ् । अन्यस्य ईत्वम् । एवं पा पानइत्यादीनामित्येके । अन्ये तु पीव मीव तीव नीव स्थौल्ये । एभ्यः प्रत्यये लोपो व्योरिति वलोपमाहुः । पीवरः कच्छपे स्थूले इति मेदिनी । तीवरो नाम्बुधौ व्याधे इति च । स्यान्नीवरो वणिजके वास्तवे ऽपि च दृश्यते इति मेदिनीविश्वप्रकाशौ । कद्वरं कुत्सिते वाच्यलिङ्गन्तक्रे नपुंसकमिति मेदिनी । बाहुलकादुपपूर्वाज्जुहोतेरुकारलोपः । उपह्वरे समीपे स्यादेकान्तेऽपि नपुंसकमिति मेदिनी । उपह्वरो रथ इति केचित् । तदुप्रयक्षतमिति मन्त्रे तु उपह्वरे उपगन्तव्ये समीपे देशे । ह्वृ कौटिल्ये । गतिविशेषवाचिना धातुना गतिमात्रमिह लक्ष्यते । ततो ऽधिकरणे घः । कृदुत्तरपदप्रकृतिस्वरत्वमिति भाष्ये व्याख्यातम् । इणूसिञ् ॥ इनः पत्यौ नृपार्कयोः । जिनो ऽर्हति च बुद्धे च पुंसि स्यात् त्रिषु जित्वरइति मेदिनी । दीना मूषिकयोषायान्दुर्गते कातरे ऽन्यवत् इति विश्वः । उष्णो ग्रीष्मे पुमान् दक्षाशीतयोरन्यलिङ्गक इति मेदिनी । फेनमीनौ ॥ डिण्डीरो ऽब्धिकफः

फेन इत्यमरः । मीनो राश्यन्तरे मत्स्यइति विश्वः । कृषे:॥ कृष्णः सत्यवतीपुत्रः केशवे वायसे ऽर्जुने ॥ पृक्षा स्याद् द्रौपदी नीलीकणाद्राक्षासु योषिति । मेचके वाच्यलिङ्गः स्यात् क्लीबे मरिचलोहयोरिति मेदिनी । ब्रध्नः सूर्यः । बुध्नः शिफायां रुद्रे चेति विश्वः । बुध्नो ना मूलरुद्रयोरिति मेदिनी । धायॄ ॥ धाना भृष्टयवे प्रोक्ता धान्यके ऽभिनवोद्भिदि इति विश्वः । पर्ण पत्रे किंशुके ना इति मेदिनी । वस्नस्त्ववक्रयोः पुंसि वेतने स्यान्नपुंसकमिति च वेन इति लुण्टाकः प्रजापतिश्च । सपूर्व्यो महानामिति मन्त्रे मनोः पुत्रे ऽपि प्रसिद्धः । लक्षणमित्यादि । लक्षणलक्ष्मणशब्दौ द्वावपि नामचिह्नयोः क्लीबौ । रामभ्रातरि पुँल्लिङ्गो हंसयोषायां लक्षणा सारसयोषायां लक्ष्मणा इति व्यवस्थेत्यर्थः । लक्षणं नाम्नि चिह्ने च सारस्यां लक्ष्मणा क्व चित् । लक्ष्मणा त्वौषधीभेदे सारस्यामपि योषिति । रामभ्रातरि पुंसि स्यात् सश्रीके चाभिधेयवदिति मेदिनी । कोशे तु सारस्यामपि निर्मकारः स्वीकृतः । वेत्रेति । लघूपधगुणः । बाहुलकादिति । एतच्च च्छ्वोः शूडिति सूत्रे वृत्तौ येन विधिरिति सूत्रे कैयटग्रन्थे स्पष्टम् । स्योनः किरणसूर्ययोरिति मेदिनी । कृञ् ॥ कर्णः पृथाज्येष्ठसुते सुवर्णाद्रौ श्रुतावपीति विश्वमेदिन्यौ । वृञ् वरणे । दीर्घपाठ तु, वॄ वरणे । वर्णो द्विजातिशुक्लादियशोगुणकथासु च । स्तुतौ ना न स्त्रियां भेदे रूपाक्षरविलेपने इति मेदिनी । विश्वमेदिनीस्थमाह । जर्ण इति । जर्णोजीर्णद्रुमेन्दुष्विति हेमचन्द्रः । द्रोणो ऽस्त्रियामाढके स्याद् आढकादिचतुष्टये । पुमान् कृपीपतौ कृष्णकाके स्त्री नीवृदन्तरे । स्त्रियाङ्क् ष्ठाम्बुवाहिन्याङ्गावादन्यामपीष्यते । अन्नं भक्तं च भुक्ते स्यात् । स्वप्नः स्वापे प्रसुप्तस्य विज्ञाने दर्शने पुमानिति मेदिनी । धेट इच्च ॥ धेना नद्यां नदे पुमान् इति मेदिनी । धेनः समुद्रे नद्यांश्च धेना इति विश्वः । श्लोको धारेत्यादिषु सप्तपञ्चाशत्संख्याकेषु वाङ्नामसु धेनेति वैदिकनिघण्टौ पठितम् । अत एव धेनां जिगाति दाशुषे । इन्द्र धेनाभिरिह मादयस्व इत्यादिषु धेना वागिति व्याख्यातं भाष्ये । तृषिशुषि ॥ जितृष् पिपासायाम् । तृष्णा लिप्सा पिपासायाम् इति विश्वः । सुञः ॥ सूना ऽधोजि-

जित्वरो जयशीलः । दुर्गते दरिद्रे । कणा । पिप्पली । एवञ्च सूत्रे वर्णग्रहणञ्चिन्त्यप्रयोजनम् । अवक्रयो मूल्यम् । काष्ठाम्बुवाहिनी । क्षेत्रसेचनार्थं

ह्निकापि चेति नान्ते अमरः । सूनं प्रसवपुष्पयोः । सूना पुत्र्यां वधस्थानगलगण्डिकयोः स्त्रियामिति मेदिनी । रमेस्त च ॥ रत्नं स्वजातिभेदे ऽपि मण्णावपि नपुंसकमिति मेदिनी । च्युवः । च्युङ्गतौ । अनेकार्थत्वादिह भाषणे । च्यवन्ते भाषन्ते ऽनेनेति विग्रहः । दशपाद्यान्तु चुपः किञ्चेति पठ्यते । चुप मन्दायाङ्गतौ चोपतीति चुप्पो मन्दगमनकर्त्ता । सुश ॥ सूपो व्यञ्जनसूदयोरिति मेदिनी । शूर्पमिति । बाहुलकादुत्वं रपरत्वं हलि चेति दीर्घः । प्रस्फोटनं शूर्पमस्त्रीत्यमरः । दशपाद्यान्तु कुसुपुभ्यश्च । सृशृभ्यामूच्च चेति पठित्वा सूपं शूर्पञ्च व्युत्पादितम् । द्विरूपकोशे ऽप्युभयन्दर्शितम् । कुयुभ्याञ्च ॥ कु शब्दे । युमिश्रणे । आभ्यां पः सनूत्वात् धातोर्दीर्घत्वञ्च । कूपः कूपकमृन्मानगर्त्तास्तु गुणवृक्षके इति मेदिनी । खष्पः क्रोधे बलात्कृतावपीति विश्वः ॥ शष्पं बालतृणे ऽपि च । पुंसि स्यात्प्रतिभाहानावपीति मेदिनी । विश्वोक्तिमाह । बाष्प इति । बाष्पमूष्माणि चाश्रुणीति कोशान्तरमभिप्रेत्याह । बाष्पश्चेति । रूपं स्वभावे सौन्दर्ये नालके पशुशब्दयोः । ग्रन्थावृत्तौ नाटकादौ आकरश्लोकयोरपीति विश्वमेदिन्यौ । तल्पमट्टे कलत्रे च शयनीये च न द्वयोरिति मेदिनी । अमरोक्तमाह । तल्पमिति । स्तनिहृषि । स्तनगर्दी देवशब्दे चुरादिर्ण्यन्तौ । हृष तुष्टौ । पुष पुष्टौ । मर्दी हर्षग्लेपनयोः । घटादिः । स्तनयित्नुः पुमान् वारिधरेऽपि स्तनितेऽपि चेति मेदिनी । हर्षयित्नुः सुते हेम्नि पोषयित्नुः पिके द्विजे । स्तनयित्नुः पयोवाहे तद्ध्वनौ मृगरोगयोरिति विश्वः । गदयित्नुः पुमान् कामे जल्पाके कार्मुके ऽपि चेति विश्वमेदिन्यौ । मदयित्नुः कामदेवे पुमान् मद्ये नपुंसकमिति मेदिनी । कृहनिभ्यां क्त्नुः ॥ कृत्नुरिति । कर्त्तेत्यर्थः । कित्त्वान्न गुणः । हत्नुरिति । अनुदात्तेत्यादिना अनुनासिकलोपः । एवमुत्तरत्र गमेरपि । शास्त्रञ्चेति । चाद्धन्ता । दशपादीवृत्तौ तु क्नुरिति तकाररहितं पठित्वा कृणुः कर्त्ता हनुर्वक्त्रैकदेशः । बाहुलकान्नलोपः । गमेस्तु जिगत्नुरित्युदाहृतम् । तत्सर्वं प्रामादिकम् । लक्ष्यविसंवादात् तथा च श्रूयते । सुरूपकृत्नुमूतये । ज्येष्ठराजं भरेकृत्नुम् अयङ्कृत्नुरगृभीतः । मा नो वधाय हत्नवे । मृगं न भीम उपहत्नुमुग्रम् । यो नः सनुत्य उत वा जिगत्नुरित्यादि । अत एव हन्तिधातुं विवृण्वता माध-

नौकाकारङ्खाद्यम् । आजिमुष्को वृक्ष विशेषः । कूपकः शुष्कनद्यादौ जलार्थं कृते

येन उपहत्नुरित्युदाहृत्य क्त्नोः कित्त्वादनुनासिकलोप इत्युक्तम् । यत्तु तेनैव सुरूपकृत्नुमिति मन्त्रे विद्यमानता तकारोपजनश्छान्दस इत्युक्तम् । तद्दशपादीवृत्तिमनुसृत्य, न तु वस्तुस्थितिमनुरुध्येति सहृदयैराकलनीयम् । दाभाभ्यां नुः ॥ दानुर्दातरि वक्रान्ते इति मेदिनी । भानू रश्मिदिवाकराविसमरः । वचेः ॥ वग्नुर्वक्ता । धेटः ॥ धेनुः स्यान्नवसूतिकेत्यमरः । विश्वोक्तिमाह । सूनुरिति । जहातेः ॥ जह्नुः स्यात्पुंसि राजर्षिभेदे च मधुसूदने इति मेदिनी । विश्वोक्तिमाह । स्थाणुरिति । स्थाणुः कीले हरे पुमान् । अस्त्री ध्रुवे इति मेदिनी । अजिर् ॥ वेणुर्नृपान्तरे वंशे इति विश्वः । रेणुः स्त्रीपुंसयोर्धूलौ पुल्लिङ्गः पर्पटे पुनरिति मेदिनी । विषेः किच्च ॥ चकारान्नित् । आद्युदात्तः । विष्णुरित्थाप्रविष्णवे शूषम् । कृदा ॥ कर्कः कर्केतले वह्नौ शुक्लाश्वे दर्प्पणे घटे इति विश्वमेदिन्यौ । राका नद्यन्तरे कच्छ्वां नवजातरजःस्त्रियाम् । संपूर्णेन्दुतिथावपीति मेदिनी । राका तु सरिदन्तरे । राका नवरजःकन्या पूर्णेन्दुः पूर्णिमाऽपि चेति विश्वः । इह दाधारा एषाक्रमेण इति ह्रस्वोऽपि बाहुलकान्नेति बोद्धव्यम् । अर्कोऽर्कपर्णे स्फटिके रवौ ताम्रे दिवस्पतौ इति विश्वमेदिन्यौ । कल्को ऽस्त्री घृततैलादिशेषे दम्भे बिभीतके । विट्किट्टयोश्च पापे च त्रिषु पापाशये पुनरिति मेदिनी । बाहुलकाद्रमेरपि कः । रङ्कः कृपणमन्दयोरिति मेदिनी । कपिलकादित्वाल्लत्वण्टाप् । लङ्का रक्षःपुरी शाखाशाकिनीकुल्टासु चेति विश्वमेदिन्यौ । सृत्र ॥ सृका बाणोत्पलवाता इति हेमचन्द्रः । सृकं संशाय पविमिन्द्र तिग्मम् इति मन्त्रस्य वेदभाष्ये तु सृकं मरणशीलं । पविं वज्रं संशाय सम्यक्तीक्ष्णीकृत्येति व्याख्यातम् । भूकं छिद्रे च काले चेति मेदिनी । शुको व्याससुते कीरे रावणस्य च मन्त्रिणि । शिरीषपादपे पुंसि ग्रन्थिपर्णे नपुंसकम् ॥ वल्कं वल्कशल्कयोरिति च । उल्का ज्वाला विभावसोरिति भूतिचन्द्रः । इणभी ॥ एकं संख्यान्तरे श्रेष्ठे केवलेतरयोस्त्रिष्विति मेदिनी । काकः स्याद्वायसे वृक्षप्रभेदे पीठसर्पिणि । शिरोवक्षालनं मानप्रभेदे द्वीपभेदयोः । काका स्यात्काकनासायाङ्काकोलीका-

गर्त्तः । मृन्मानं मृन्कृतं मानपात्रङ्गुणवृक्षकः नौकादौ गुणाख्यरज्जुबन्धनार्थकाष्ठम् ॥ जलाको बहुवक्ता । कार्मुकन्धनुः । विक्रान्तो वीरः । अर्कपर्णो अर्कवृक्षः । ग्रन्थिपर्णम् । अरान्धाबदे भाषया ॥ शल्को मत्स्यत्वक् । पीठसर्पी पङ्गुः ।

कमङ्कयोः । रक्तिकायामलङ्काञ्च काकमाच्याश्च योषिति । काकं सुरतबन्धे स्यात् काकानामपि संहताविति विश्वमेदिन्यौ । पाकः परिणतौ शिशौ । केशस्य जरसा शौक्ल्ये स्थाल्यादौ पाचने ऽपि च । शक्लन्तु शकल वल्के इति मेदिनी । शल्कैरग्निमिन्धान इति मन्त्रे काष्ठखण्डैरिति व्याख्यातारः । मर्क इति । मर्चिः सौत्रो धातुरिति बहवः । वर्म शब्दे चौरादिक इति सिद्धान्तयात्सूत्रे कैयटः । मर्तो मर्त्त मर्चयति द्वयेनेति मन्त्रे मर्चयति विधेयीकरोति भर्त्सयतीति वेदभाष्यम् । न चैवं णिलोपस्य स्थानिवद्भावात्कत्वं न स्यात् इति वाच्यम् । पूर्वत्रासिद्धे तदभावात् । बाहुलकात् शयतेः कन् । शाको द्वीपान्तरे ऽपि च । शक्तौ द्रुमविशेषे च पुमान् हरितके स्त्रियामिति मेदिनी । नौ ह्रः ॥ निहाका गोधिका समे इत्यमरः । शाकं नस्यानिहाकयोरिति श्रुतिः । निष्कमस्त्री साष्टहेमशते दीनारकर्षयोः । वक्षोलङ्करणे हेमपात्रे हेमपले ऽपि चेति मेदिनी । स्यमेः ॥ स्यमु शब्दे । स्यमीका मिलीकायां स्त्री स्यमीको नाकुवृक्षयोरिति मेदिनी । अजिय ॥ एभ्यः कन् । वृषान्दीर्घश्च । तत्सामर्थ्याद्गुणाभावः । शकेः ॥ शकुन्तिपक्षिशकुनिशकुन्तशकुनद्विजा इत्यमरः । शकुनस्तु पुमान् पक्षिमात्रे पक्षिविशेषयोः । शुभशंसनिमित्ते च शकुनं स्यान्नपुंसकम् इति मेदिनी । शकुन्तः कीटभेदे स्याद् भासपक्षिविहङ्गयोरिति । शकुनिः पुंसि विहगे सौबले करणान्तरे इति च । बाहुलकात्कमेरपि प्रत्ययादिलोपे कुशब्दादेशः । कुन्तिः । इतो मनुष्यजातेरिति ङीष् कुन्ती पाण्डुप्रियायाञ्च शल्लक्याङ्गुग्गुलुद्रुमे इति मेदिनी । कन्युन् ॥ क्षिपण्युस्तु पुमान् देहे सुरभौ वाच्यलिङ्गक इति मेदिनी । भुरण्यः स्यात् पुमान् भानौ ज्वलने शशलाञ्छने इति विश्वमेदिन्यौ । कृञ् ॥ करुणस्तु रसे वृक्षे कृपायाङ्करुणा मतेति विश्वमेदिन्यौ । वरुणस्तरुभेदे ऽप्सु प्रतीचीपतिसूर्ययोरिति त्रिश्वः । दारुणो रसभेदे ना त्रिषु तु स्याद्भयावहे इति मेदिनी । त्रो रश्च ॥ तरुणं कुब्जपुष्पे ना रुचके यूनि च त्रिष्विति मेदिनी । तरुणी तलुनीति चेति द्विरूपेषु विश्वः । क्षुधिपिशि ॥ पिशुनङ्कुङ्कुमे स्मृतम् । कापि वक्रे च काके ना सूचकक्रूरयोस्त्रिषु । पृकायां पिशुना स्त्री स्यादिति मेदिनी । मिथुनं तु द्वयो राशिभेदे स्त्रीपुं-

---

रक्तिका गुञ्जा । नाकु वल्मीकम् । इतो मनुष्येति । कृदिकारादित्युचितम् ।

सयुग्मके इति च ॥ फलेः । फल्गुनस्तु गुडाकेशे नदीजार्जुनभूरुहे । तपस्यस-ञ्ज्ञमासे च पूर्णिमायाश्च फाल्गुनीति मेदिनी । अण् चेति । प्रज्ञादित्वात्पक्षे ऽणिसर्थः । फल्गुनः फाल्गुने ऽर्जुन इति द्विरूपकोशः । अशेर्लशू च ॥ अश भोजने । अस्मादुनन् धातोर्लशादेशश्च । लशुनं महाकन्दः । उशना लशुनं वेश्म कश्मलं विश्वमश्ववदिति मध्यतालव्येषु विश्वः । लम् चेति पाठस्तु प्रामादिकः । अर्जेर्णिलुक् च ॥ अत्र णेरनिटीति सिद्धे णिलुक् चेत्युक्तेः फ-लश्चिन्त्यम् । अर्जुनः ककुभे पार्थे कार्त्तवीर्यमयूरयोः । मातुरेकसुते ऽपि स्या-द्धवले पुनरन्यवत् । नपुंसकन्तृणं नेत्ररोगे चाप्यर्ज्जुना गवि । उषायां बाहु-दानद्याङ्कुट्टिन्यामपि च क्व चित् इति विश्वमेदिन्यौ । अर्त्तेश्च ॥ अरुणो व्यक्तरागे ऽर्के संध्यारागे ऽर्कसारथौ । निःशब्दे कपिले कुष्ठभेदे ना गुणिनि त्रिषु । अरुणा ऽतिविषा श्यामा मञ्जिष्ठात्रिवृतासु चेति मेदिनी । अजियमि॥ विश्वानि देव वयुनानि विद्वानिति मन्त्रे वयुनानि प्रजनानीति वेदभाष्यम् । वैदिकानिघण्टौ प्रज्ञापर्याये प्रशस्यपर्याये च वयुनशब्दः पठितः । वृतॄ ॥ वर्म-न्तर्सीमति । तितुत्रेति नेट् । षत्वन्तु न भवति । बाहुलकेन पत्वे कर्त्तव्ये प्रत्य-यसञ्ज्ञाया अप्रवृत्तेः । कक्षशब्दे तु पत्वं भवत्येव । एतच्च सर्वमादेशप्रत्यययो-रिति सूत्रे भाष्यकैयटपदमञ्जरीषु स्पष्टमेव । उणादिवृत्तिकृतस्तु सर्वेपीह ष-त्वमुदाजह्रुः । तेषामयमाशयः । अस्तु भाष्यप्रामाण्याद्वर्सन्तर्भमिति दन्त्योऽपि साधुः । बाहुलकबललभ्यपत्वाभावस्य पाक्षिकत्वे ऽपि बाधकाभावात् पक्षे ष-त्वमस्तु । वृपितृपिभ्याङ्णिण्यन्तादेरचि घञर्थे कप्रत्यये वा वर्षतर्षशब्दयोर्दु-र्वारत्वात् । अल्विधौ भयादीनामुपसंख्यानं नपुंसके क्तादिनिवृत्त्यर्थमित्यत्र वर्षमित्याकारे उदाहृतत्वाच्चेति । तस्मादिह द्विरूपता फलिता । वर्षो ऽस्त्री भारतादौ स्याज्जम्बुद्वीपाब्दवृष्टिषु । प्रावृट्काले स्त्रियां भूम्नि इति मेदिनी । तर्षो लिप्सोदन्ययोरिति च । पुत्रादौ तर्णके त्वर्षे वत्सः क्लीवन्तु वक्षसि इति त्रिकाण्डशेषः । हंसः स्यान्मानसौकसि । निर्लोभनृपविष्णवर्कपरमात्मसु मत्सरे। योगभेदे मन्त्रभेदे शरीरमरुदन्तरे । तुरङ्गमप्रभेदे चेति मेदिनी । कंसो ऽस्त्री तैजसे द्रव्ये कांस्ये माने ऽसुरे तु नेति च । कंसो देशान्तरे स्मृतः । कांस्य-पात्रे च मानभेदे च कीर्तित इति विश्व । कक्षा स्यादन्तरीयस्य पश्चादञ्चलप-

———

प्रत्ययसञ्ज्ञाया इति । षत्वं नेत्येव युक्तम् ॥

त्सरे । स्पर्द्धायां ना तु दोर्मूलकच्छवीरुत्तृणेषु चेति मेदिनी । प्लुषः ॥ प्लक्षो जटी गर्दभाण्डद्विपभित्कुञ्जराशने इति मेदिनी । प्लक्षो द्वीपविशेषे स्यात्पर्कटीगर्दभाण्डयोः । पिप्पले द्वारपार्श्वे च गृहस्य परिकीर्तित इति विश्वः । माने मांसं स्यादामिषे क्लीबं कक्कोलीजटयोः स्त्रियामिति मेदिनी । अशेः ॥ अथाक्षमिन्द्रिये । ना द्यूताङ्गे कर्षचक्रे व्यवहारे कलिद्रुमे इत्यमरः । अक्षो ज्ञानात्मशकटव्यवहारेषु पाशके । रुद्राक्षेन्द्राक्षयोः सर्पे विभीतककरावपि । चक्रे कर्षे पुमान् क्लीबन्तुत्थसौवर्चलेन्द्रियेे इति मेदिनी । स्त्रुवश्चि ॥ ऋक्षः पर्वतभेदे स्याद्भल्लूके शोणके पुमान् । कृते त्वच्छानेन्यलिङ्गं नक्षत्रे च नपुंसकमिति मेदिनी । ऋषेर्जातौ ॥ नियमार्थमिदं सूत्रं ऋषेर्जातावेवेति । तेनान्येभ्यः केवलयौगिकत्वे ऽपि प्रत्ययः । उन्दिगुधि ॥ गुत्सः स्यात्स्तवके स्तम्बे हारभिद्ग्रन्थिपर्णयोरिति मेदिनी । गुच्छश्च गुत्सो गुच्छो गुलुच्छवदिति द्विरूकोशात् ॥ स्याद्गुच्छः स्तबके स्तम्बे हारभेदकलापयोरिति च । वर्गद्वितीयान्तमेदिनीकोशाच्च । गृधेश्चर्त्वेन सिद्धे भष्भावनिवृत्तये दकारविधिः । पक्षो मासार्द्धके पार्श्वे ग्रहे साध्यविरोधयोः । केशादेः परतो वृन्दे बले सखिसहाययोः । चुल्लीरन्ध्रे परत्रे च राजकुञ्जरपार्श्वयोरिति विश्वमेदिन्यौ । अशेः सरः ॥ अक्षरं स्यादपवर्गे परमब्रह्मवर्णयोरिति हेमचन्द्रः । उज्ज्वलदत्तादयस्तु अशेः सरन्निति पेठुः । तन्न । नित्स्वरापत्तेः । इष्यते तु प्रत्ययस्वरेणाक्षरशब्दस्य मध्योदात्तत्वम् । ऋचो अक्षरे परमे व्योमन् । अक्षरेण मिमते सप्त वाणी इत्यादृङ्मन्त्रेषु त्रीणि च शतानि षष्टिश्चाक्षराणीति यजुषि च तथैव पाठात् । अत एव द्वितीयाह्निकान्ते । अश्नोतेर्वा सरो ऽक्षरमिति भाष्यकृतोक्तम् । सपूर्वाच्चित् ॥ पूर्वेण सहितः सपूर्वः । इद्वत्सराय परिवत्सराय । संपूर्वादिति पाठस्तु लक्ष्यविरोधादुपेक्ष्यः । कृधू ॥ कृत्सर इत्यादि हारावलीस्थम् । धूसरी किन्नरीभेदे नागरे त्रिषु पाण्डुरे इति मेदिनी । मत्सरा मक्षिकायां स्यान्मात्सर्यक्रोधयोः पुमान् । असह्यपरसंपत्तौ कृपाणे चाभिधेयवत् इति । मत्सरो ऽन्यशुभद्वेषे तद्वत्कृपणयोः स्त्रिष्विति अमरः । असह्यपरसंपत्तौ मात्सर्ये कृपणे क्रुधीति विश्वः । वेदे तु योगं पुरस्कृत्य प्रयुज्यते । इन्दुमिन्द्राय मत्सरम् । तं सिन्धवो मत्सरमिन्द्रपानामित्यादि । मत्सरं हर्षहेतुमिति-

जटा जटामांसी । लक्ष्यविरोधादिति । बार्हिष्ठसंवत्सरेति स्वरविधायकन्तु

तद्भाष्यम् । अमरोक्तिमाह । तसर इति । अनुदात्तोपदेशेत्यादिना ऽनुनासिकलोपः । ऋक्षरः । ऋत्विक् इति ऋक्षरन्तोयधारायामृक्षरस्त्वृत्विजि स्मृतमिति मेदिनी । अनृक्षरा ऋजवः सन्तु पाथा इति मन्त्रस्य वेदभाष्ये तु ऋक्षरः कण्टक इति व्याख्यातम् । पीयुक्तणिभ्याम् ॥ राजादनं प्रियालुः स्यादित्यमरः । प्रियालः स्यात्पियालवदिति हि द्विरूपकोशः । बाहुलकाद्धञरपि कालन् । नलोपः । न्यङ्क्वादित्वात्कुत्वम् । भागालं नरमस्तकम् । मत्वर्थे इनिः । चण्डीकान्तो भगाली च लेलिहानी वृषध्वज इति राजशेखरः । कठिकुषिभ्याम् ॥ कठ कृच्छ्रजीवने । कुष निष्कर्षे । कठाकुः कपित्थहृयर्के ना परोत्तापिनि त्रिष्विति मेदिनी । उज्ज्वलदत्तस्तु कठिकषिभ्यामिति पठित्वा कषशिषेति दण्डकधातुमुपन्यस्य कषाकुरित्युदाजहार । तत्कोशविरुद्धम् । मेदिनीकोशे उकारप्रक्रमे पाठात् । सर्त्तेः ॥ सदाकुर्नानिले चक्रे ज्वलने प्रतिमूर्यके इति मेदिनी । वृत्तेः ॥ वार्त्ताकुरपि वार्त्ताके वृन्ताको ऽपि च दृश्यते इति द्विरूपे विश्वः । वार्त्ताकी हिङ्गुली सिंही भण्टाकी दुष्प्रधर्षिणीत्यमरः । वार्त्ताकं पित्तलङ्किञ्चिदङ्गारपरिपाचितमिति वैद्यकशास्त्रम् । पर्देः ॥ पृपाकुरित्यादि । पृदाकुर्वृश्चिके व्याघ्रे सर्पचित्रकयोः पुमानिति मेदिनी । सृयुः ॥ सरण्यस्तु पुमान् वारिवाहे स्यान्मातरिश्वनि इति मेदिनी । सरण्युरस्यमनुरज्ज्व इति मन्त्रस्य भाष्ये तु सरण्युः शीघ्रगामीति व्याख्यातम् । यत्रागूरुष्णिका श्राणा विलेपी तरला च सेत्यमरः । वचक्नुस्तु पुमान् विप्रे वावदूके ऽभिधेयवदिति मेदिनी । ऋषिविशेषे ऽप्ययम् । यस्य कन्या वाचक्नवीति प्रसिद्धा । आनकः ॥ भयानकः स्मृतो व्याघ्रे रसे राहौ भयङ्करे इति मेदिनी । शिङ्घाणकइति । शिघि आघ्राणे । शिङ्घाणङ्काचपात्रे स्यात् लोहनासिकयोर्मलइति विश्वः । शिङ्घाणः फेनडिण्डीरो नक्रेरेतश्च पिच्छलइति विक्रमादित्यकोशः । हारावलीस्थमाह । शिङ्घाणमिति । उल्मुकमिति च । दर्विः कम्बिः खजा काचेत्यमरः ॥ क्रियः ॥ कुकू प्रसयोऽयङ्कारो गुणनिषेधार्थः । हसिमृ ॥ हस्तः करे करिकरे सप्रकोष्ठे करे ऽपि च । ऋक्षे केशात्परो व्राते इति मेदिनी । मूर्त्तो भूलोकः । तत्र भवो मर्त्यः । दिगादेराकृतिगणत्वाद्यत् । गर्त्तस्त्रिगर्त्तभेदे स्याद् वटे च कुकुन्दरे । एनः कर्बुर आगते । अन्तः स्वरूपे नाशे वा न स्त्री शेषे ऽन्तिके त्रिषु । दन्तो ऽद्रिकटके कुञ्जे दशने चौषधौ स्त्रियामिति मेदिनी । लोतमश्रुणि चोरिते इति विश्वः ।

क्तक्तवतू इति सूत्रे लोतो मेष इति कैयटः । पोतः शिशौ वहित्रे चेति विश्वमेदिन्यौ । धूर्त्त इति । धुर्वी हिंसायाम् । लोपो व्योरिति वलोपः क्डिलीसनुवृत्तिपक्षे तु राल्लोप इति लोपः । हलि चेति दीर्घः । धूर्त्तन्तु खण्डे लवणे धत्तूरे ना शठे त्रिष्विति मेदिनी । तनिमृङ्भ्याम् ॥ ततं वीणादिकं वाद्यमिसमरः । अथ ततं व्याप्ते विस्तृते च त्रिलिङ्गकम् । क्लीबं वीणादिवाद्ये स्यात् पुल्लिङ्गस्तु समीरणे । मृतन्तु याचिते मृत्यौ क्लीबं मृत्युमति त्रिष्विति मेदिनी । अञ्जिघ्रि ॥ अक्तं परिच्छिन्नम् । अक्तपरिमाणस्य वाचक इति भाष्यस्य कैयटेन तथा व्याख्यातत्वात् । अत व्यस्तं माप्ते च सङ्कुले इति विश्वप्रकाशे लिपिभ्रमादक्तं व्याघ्रे च सङ्कुले इत्युदाहरन्नुज्ज्वलदत्तो भ्रान्तत्वादुपेक्ष्यः । तथा च मेदिन्यां वकारादिप्रकरे व्यस्तन्तु व्याकुले व्याप्तइत्युक्तम् । घृतमाज्ये जले क्लीबं प्रदीप्ते त्वभिधेयवत् । सितमवसिते च बद्धे धवले त्रिषु शर्करायां स्त्री इति मेदिनी । ऋ गतौ । बाहुल्कात् क्तः । ऋतमुञ्छशिले जले । सत्ये दीप्ते पूजिते स्यादिति मेदिनी । दुतनिभ्याम् । दूतः प्रेष्यः। गौरादित्वात् ङीष् । दूती । अथ कथं, तेन दूतिविदितं निषेदुषेति रघुः। दूङ् परितापे । अस्मात् क्तिच् । दूत्यान्दूतिरपि स्मृतेति द्विरूपकोशः । ततोऽनुकम्पे जनके इति विश्वमेदिन्यौ । बाहुलात् शीङो ऽपि । शीता लाङ्गलपद्धतिः । रामपत्नी च । शीता नभःसरिति लाङ्गलपद्धतौ च शीता दशाननरिपोः सहधर्मिणी च । शीतं स्मृतं हिमगुणे च तदन्विते च शीतोष्णसेचबहुवारतरौ च दृष्ट इति तालव्यादौ धरणिः । सीता दन्त्यादिरपि । सीता लाङ्गलपद्धतिः । वैदेही स्वर्गगङ्गासु इति मेदिनी कोशात् । सीता लाङ्गलरेखा स्यात् व्योमगङ्गा च जानकी इति दन्त्यादौ रभसकोशाच्च । अत्र त्यक्तं सूत्रम् । जेर्मुट् चोदात्तः ॥ जि जये । अतः क्तस्तस्य मूडागमः स चोदात्तः धातोर्दीर्घश्च । जीमूतस्येव भवति । जीमूतोद्रौ भूतिकरे देवताडे पयोधरे इति मेदिनी । वेणी खरा गरीदेवताडीजीमूत इत्यपि इति अमरः । जीमूतः स्यात् वृत्तिकरे शक्रेऽद्रौ घोषके घने इति विश्वः । इदं सूत्रमार्षमिति पुरुषोत्तमः । अत एव आकरे पृषोदरादिषु जीमूतशब्द उदाहृतः । लोष्टानि लेष्टवः पुंसि इत्यमरः । अत्र पुंसीत्युभयान्वयि । तेन पुंनपुंसकलिङ्गोऽयम् । तथा

उपायान्तरं बोध्यम् ॥ बहुवारस्लेष्मातकः ।

च स्थाने ऽन्तरतमसूत्रे भाष्यम् । लोष्ठः क्षिप्तो बाहुवेगङ्गत्वा इत्यादि । अत एव लोष्ठः शण्ढे ऽपि लेष्टुः स्यादिति पुंस्काण्डे गोपालितः । पलितं शैलजे तापे केशपाके च कर्दमे इति मेदिनी । हरिता स्त्री च दूर्वायां हरितवर्णयुते ऽन्यवदिति च । रुहेः ॥ रोहितं कुङ्कुमे रक्ते ऋजुशक्रशरासने । पुंसि स्यान्मीनमृगयोर्भेदे रोहितकद्रुमे । रोहितं रक्तगोशीर्षकुङ्कुमाजिकुचन्दने । पुमाश्वदान्तरे भौमे वर्णे च त्रिषु तद्वतीति मेदिनी । विशेः ॥ पिशितं मांसं मांस्यां स्त्रीति मेदिनी । मांस्याजटामांस्याम्। तथा च जटा च पिशिता पेशीति धन्वन्तरिः । श्रुदक्षि ॥ उद्यतस्रुचे भवसि श्रवाय्य इति मन्त्रे श्रवाय्यो मन्त्रैः श्रवणीय इति वेदभाष्यम् । दक्षाय्यो यो दम आसनित्यः । विश्वरूपस्य स्पृहयाय्यस्य राजन् । मित्र इव यो दिधिषाय्योऽभूद् इत्यादिष्वपि यौगिकार्थ एव भाष्ये पुरस्कृतः । उज्ज्वलदत्तस्तु दधिषाय्य इति सूत्रे पठित्वा दधिपूर्वात्स्यतेराय्यः षत्वञ्च दधिषाय्यो घृतमिति व्याख्यत् । दशपादीवृत्तिकारस्तु दधिशब्दस्य द्वित्वङ्गुणाभावः । अत्वञ्चाभ्यासस्य निपात्यतइत्याह । प्रसादकारादयो ऽप्येवमेव प्रतिपन्नाः । तदेतत्सर्वं लक्ष्यविरोधाद्वेदभाष्यविरोधाच्चोपेक्ष्यम् । स्तुषेय्यं स्तोतव्यम् । बहुरूपमिति वेदभाष्यम् ॥ यत्तूज्ज्वलदत्तेन स्तुवः केय्य इति पठित्वा किन्त्वाद् गुणाभाव उवङादेशे स्तुवेय्यः पुरन्दर इत्युक्तम् । तन्न । वेदतद्भाष्यादिविरोधात् । तस्मादिह कृमेय्यप्रत्ययं पठन् पशपादीवृत्तिकृदेव ज्यायान् । पर्जन्यो मेघशब्दे ऽपि ध्वनदम्बुदशक्रयोरिति मेदिनी ।अजयकोशस्थमाह।वदान्य इत्यादि । अभिनक्षि ॥ नक्षगतौ । विधिः प्रकृत्यन्तरम् । नक्षत्रमिति । नभ्राणनपादिति सूत्रे नञः प्रकृतिभाव उक्तः । क्षदेः सौत्रे अनि नञ्समासे व्युत्पत्त्यन्तरन्तादिति बोद्ध्यम् । यत्र नोपदृष्व्यदेवता । संत वायुर्वातेन गच्छतां संयजत्रैरङ्गानीति मन्त्रे तथा दर्शनात् । गडेः ॥ गड सेचने । कलत्रं श्रोणिभार्ययोरित्यमरः । वृत्रश्चित् ॥ चित्त्वादन्तोदात्तः । त्वादत्रापान्दात्वा नद्यमानः । सुविदः कत्रः ॥ इह प्रायेण कलत्रमिति नित्तं पठन्ति तत्प्रामाणिकम् । बृहस्पतेः सुविदत्राणि राध्येत्यादौ नित्स्वरादर्शनात् । कृदुत्तरपदप्रकृतिस्वरेण प्रत्ययस्वरस्यैव दर्शनाच्च । धन्वचत्कान्तत्रश्चेति मन्त्रे ऽपि तथैव कृन्तत्रङ्कर्तनीयमरण्यमिति वेदभाष्यम् । भृमृ ॥ भृञ् भरणे मृङ् प्राणत्यागे । दृशिर् प्रेक्षणे । दशपाद्यान्तु भृदशीङ्कृति पठित्वा दृङ् आदरे द्रियते दरत्तः शेते

गन्त इत्युदाहृतं तन्न । रुशन्तमग्निं दर्शतं बृहन्तम् । तरणिर्विश्वदर्शतः । देव्यो दर्शतो रथ इत्यादिमन्त्रैस्तद्भाष्येण च विरोधात् । भरतो नाट्यशास्त्रे मुनौ नटे । रामानुजे च दौष्यन्तौ इति मेदिनी । यजते क्रतिवगिति उज्ज्वलदत्ताद्यनुरोधेनोक्तम् । त्रिर्नो अश्विना यजत हिरण्ययमयं यजतो बृहन्तमित्यादिषु यजतशब्दो यष्टव्यपरतयैव वेदभाष्ये व्याख्यातः । पर्वतः पादपे पुंसि शाकमत्स्यप्रभेदयोः । देवमुन्यन्तरे शैले इति मेदिनी । हर्यतो ऽश्व इति । एतदपि हर्य कान्तौ गतौ चेति धात्वर्थे वृत्तिकारोक्त्यनुसृत्योक्तम् । परिस हर्यतं हरिम् । आ हर्यताय धृष्णवे इत्यादिमन्त्रेषु हर्यतः सर्वैः स्पृहणीय इति वेदभाष्यम् । पृषिरञ्जि ॥ पृषन्मृगे पुमान् बिन्दौ न द्वयोः पृषतो ऽपि ना ॥ अनयोश्च विषु जलबिन्दुयुक्ते ऽप्युभाविमौ । रजतन्त्रिषु शुक्ले स्यात् क्लीबं हारे च दुर्वर्णइति मेदिनी । शीङ्शपि ॥ उज्ज्वलदत्तेनात्र पञ्चमो वञ्चिः पठ्यते । अन्यैस्तु वन्दिः । वञ्चथवन्दथयोरन्यतरं वेदादावुपलभ्य बहुश्रुतैः पाठो निर्णेयः । बाहुलकादिति । शमथः शान्तिमान्त्रिणोर्मंगति मेदिनी । दमथस्तु पुमान् दण्डे दमे च परिकीर्त्तित इति च । रुदिविदि ॥ विदथो योगिकृतिनोरिति मेदिनी । अत्रोज्ज्वलदत्तः । रुविदिभ्याङ्कदिति पठता रौतीति रुवथः श्वेत्युदाजहार । दशपादीवृत्तिकारस्तु रुदिविदिभ्याङ्किदिति पपाठ । किं चोपसर्गे वसेरिसेरकुपगुत्तरसूत्रन्द्वावपि न पेठतुः । तथा हि । शीङ् शपेति सूत्रानन्तरं सोपसर्गाद्वसेः भृञश्चित् रुदिविदिभ्याङ्कित् । इत्युज्ज्वलदत्तस्य सूत्रपाठः । अन्यस्य तु शीङः शपेति सूत्रान्तरम् । आङिवसः, भृञश्चित्, रुदिविदिभ्याङ्कित्, इति सूत्रपाठः । तदेतत्पाठद्वयं भाष्यादिविरोधादुपेक्षणम् । तथा हि । गाङ्कुटादिसूत्रे के पुनश्चङादयः चङ् अङ् नजिङ्अवङ्गनङः इति भाष्यम् । रुदविदिभ्यां ङिदित्यनुवर्त्तमाने उपसर्गे वसेरित्यप्रत्यय इति कैयटेन व्याख्यातम् । एवञ्च कुर्वतां भाष्यादिविरोधः स्पष्ट एवेत्यास्तान्तावत् ॥ भाष्यकैयटमते ऽपि ङिदित्यस्यानुवृत्तेः फलञ्चिन्त्यम् । अतविच-मि ॥ गौरादित्वात् ङीष् । अतसी स्यादुमा क्षुमेत्यमरः । चमसो यज्ञपात्रस्य भेदे ऽस्त्री पिष्टके स्त्रियाम् । पनसः कण्टकिफले कण्टके वानरान्तरे ।

---

शैलजं शिलाजतु । कुचन्दनम् । रक्तचन्दनम् । नदान्तरे । ब्रह्मपुत्राख्ये ॥ दुर्वर्णे

स्त्रियां रोगप्रभेदे स्यादिति मेदिनी । वेजस्तुद् चेति पठित्वा वी गत्यादिष्विति धातुरुदाहृतः । वाह्युभ्याम् ॥ अजगरे शयुर्वाहस इत्युभावित्यमरः । वा तु क्लीबं दिवसचामरादाविति च । कृशृ ॥ करभो मणिबन्धादिकनिष्ठान्तोष्ट्रतत्सुते । शरभस्तु पशौ इति मेदिनी । समौ पतङ्गशलभाविस्यमरः । करभः करिशावके इति च । गर्दभः श्वेतकुमुदे गर्दभो गन्धभिद्यपि । रासभे गर्दभो क्षुद्रजन्तुरोगप्रभेदयोरिति मेदिनी । ऋषिवृषिभ्याकित् ॥ ऋषभस्त्वौषधान्तरे । स्वरभिद्वृषयोः कर्णरन्ध्रगर्दभपुच्छयोः । उत्तरस्तु स्मृतः श्रेष्ठे स्त्री नराकारयोषिति । शूकशिम्ब्यां शिरालायां विधवायां क चिन्मतेति मेदिनी । वृषभः श्रेष्ठवृषयोरिति च । रासिवल्लिभ्याञ्च ॥ रासृ शब्दे वल्ल संवरणे । वल्लभो दयिते ऽध्यक्षे सलक्षणतुरङ्गमे इति च मेदिनी । जृविशिभ्यां झच् ॥ बाहुलकादर्हतेरपि झच् ॥ अर्हन्तः क्षपणको जिन इति विक्रमादित्यकोशः । तृभू । इह नान्दिपर्यन्तः । तदाह । नन्दयन्त इति । उज्ज्वलदत्तस्तु नन्दन्त इत्युदाहृत्य पूर्वसूत्रेण गतार्थतामाशङ्क्य अनाशीरर्थं नान्दिग्रहणमित्याह । तन्न । इहाप्याशिषीत्यस्य स्वयमेवानुवर्त्तितत्वात् । बाहुलकादिति । जर्जरं शैवले शक्रध्वजे त्रिषु जरन्तरे। झर्झरः स्यात कलियुगे वाद्यभेदे नदान्तरे इति मेदिनी । अर्त्तिकमि । अररं च्छदकपाटयोः । भ्रमरः कामुके भृङ्गे चमरश्चामरे स्त्रि तु मञ्जरीमृगभेदयोरिति मेदिनी । वासर इति । वसेर्ण्यन्तादरः । के चित्तु सूत्रे वाशिभ्य इति तालव्यं पठित्वा वाशृ शब्दे वाश्यते वाशरः ॥ कोकिल इत्याहुः । आङ्गमादि ॥ अङ्गार उल्मुके न स्त्री पुंलिङ्गस्तु महीसुते इति मेदिनी। मन्दारः स्यात सुरद्रुमे । पारिभद्रे ऽर्कपर्णे च मन्दारो हस्तिधूर्त्तयोरिति च । मदि स्तुत्यादावित्यस्माद् बाहुलकादारुरपि। पारिभद्रे तु मन्दारुर्मन्दारुः पारिजातक इति शब्दार्णवः । गडेः ॥ कडारः कपिले दासे इति मेदिनी । शृङ्गारभृङ्गारौ ॥ शृङ्गारः सुरते नाट्यरसे च गजमण्डने । नपुंसकं लवङ्गे ऽपि नागसंभवचूर्णयोरिति मेदिनी । भृङ्गारी झिल्लिकायां स्यात् कनकालौ पुनः पुमान् इति च । कञ्जिमृजिभ्याम् ॥ कञ्जारो जठरे सूर्ये विरिञ्चौ चारणे मुनाविति विश्वमेदिन्यौ । मार्जार ओतौ खट्वाङ्गे इति च।

---

कुण्यम् । पिष्टके । माषचूर्णे । शूकशिम्बी । कपिकच्छुः । नागसम्भवम् । सि-

कमेः ॥ कुमारः स्याच्छुके स्कन्दे युवराजे ऽश्ववारके । बालके वरुणाद्रौ ना न द्वयोर्जात्यकाञ्चने । कुमारी शैलतनया वनमाल्योर्नदीभिदि । सहाऽपराजिता कन्याजम्बूद्वीपेषु च स्त्रियामिति मेदिनी । विश्वप्रकाशे तु कुमारी रामतरणीति पाठः । रामतरणी लताविशेषः । सहेति प्रसिद्धः । तरणी रामतरणी कणिका चारुकेसरा । सहा कुमारी गन्धाढ्येति धन्वन्तरिनिघण्टुः । जम्बूद्वीपसहा कन्या कुमार्योथाश्ववारके । बालके कार्त्तिकेये च कुमारी भर्त्तृदारके इति त्रिकाण्डशेषः ॥ तुषारस्तुहिनं हिमम् । कासारः सरसी सरः । कणेः ॥ कुणपः पूतिगन्धे शवे ऽपि चेति मेदिनी । विटपत्रिष्टप इति । विटपो न स्त्रियां स्तम्बशाखाविस्तारपल्लवे । पीठाधिपे चेति मेदिनी । आदेः परइति । एतच्चोज्ज्वलदत्तरीत्योक्तम् । अन्ये तु सूत्रे विष्टपेति दन्त्योष्ठ्यादिमेव पठन्ति । युक्तञ्चैतत् । यत्र ब्रध्नस्य विष्टपमित्यादौ तथा दर्शनात् । उलपो न स्त्री गुल्मिन्यां ना तृणान्तरे इति मेदिनी । लतिकेति । लतिः सौत्रः । इष्टकेति । इष्टकेषीकामालानामिति निर्देशात् प्रत्ययस्थादिति नेत्त्वम् । अर्त्तिगॄ ॥ गर्भो भ्रूणेऽर्भके कुक्षौ सन्धौ पनसकण्टके इति मेदिनी । इणः ॥ इभः स्तम्बेरमः पद्मीत्यमरः । लक्षेर्मुट् च ॥ लक्ष दर्शनाङ्कनयोः । चुरादिण्यन्तः । अस्मादीप्रत्ययः स्यात् । तस्य मुडागमश्च णिलोपः । लक्ष्मीः संपत्तिशोभयोः । ऋद्ध्यौषधौ च पद्मायां वृद्धिनामौषधे ऽपि च । फलिन्यां स्त्रीति मेदिनी ॥

इत्युणादिवृत्तौ तृतीयः पादः ॥

अयमिति ॥ द्विचतुःषट्पदोरगाः । इत्यमरेणोभयलिङ्गोक्तेः । सुभूतिचन्द्रादिभिरपि वातप्रमीशब्दस्य द्विलिङ्गतोक्तेश्चेति भावः । तत्र कृदिकारादिति पाक्षिके ङीष् कैश्चिदिष्यते । न हि कारग्रहणे केवलग्रहणमिति सुनिश्चयेन परिभाषितम् । अत एव वातमी श्री लक्ष्मीति पक्षे ङ्यन्ताः सुसाधव इति रक्षितः । एतच्च दुर्घटग्रन्थे स्पष्टम् । आशीराश्याहिदंष्ट्रायां लक्ष्मीर्लक्ष्मी हरिस्त्रियामिति द्विरूपकोशः । अत एवाशीविषो विषधर इति सङ्गच्छते । आशीमिव कलामिन्दोरिति राजशेखरः । आशीर्हिताशंसाहिदंष्ट्रयोरिति सान्ते ऽमरात् । सान्तो ऽप्याशीःशब्द इत्यन्यदेतत् । बद्धेति ।

---

न्दूरम् । चूर्णम् । पटवासः । कनकालुः । स्वर्णजलपात्रम् । सहा घृतकुमारी इति

मुष्ट्या तु बद्धया सरत्निः स्यादिस्त्वमरः । सहस्त इत्यर्थः । प्रसङ्गादाह । अरत्निरिति । न रत्निररत्निरिति । न रत्निररिति नञ्समासः । वशपादीवृत्तौ तु इह सूत्रे अर्त्तेररत्निचमक्तिं विधाय रत्निः साधितः । उज्ज्वलदत्तानुसारेणाह । वायू रात्रिश्चेति । इह शब्दो मघं । अशनिश्चेति अपि बोद्धव्यम । आविष्कृणोमि तन्यतुर्न वृष्टिमिति मन्त्रे तन्यतुर्गर्जितमिति च मन्त्रे तन्यतुरशनिरिति वेदभाष्ये व्याख्यातत्वात । अञ्जलिस्तु पुमान् हस्तसंपुट कुटवे ऽपि चेति मेदिनी । स्थविरान्त्रमिति । वनिष्टोर्वधया त्रिधीतिमन्त्रस्य भाष्ये तथोक्तत्वात । अजिष्ठ इति । केचिदञ्जेरिष्णुचमिच्छन्ति । तेषामञ्जिस्त्युदाहरणम् । मदेरिति । मत्स्यो मीने ऽथ पुंभूम्नि वेशइति मेदिनी । अतिथिः कुशपुत्रे स्यात पुमानागन्तुके त्रिषु । अङ्गुलिः करशाखायाङ्कर्णिकायाङ्गजस्य चेति मेदिनी । कवमः सन्नाहः । कुक्कुटजातिश्च । अच इति । कवचो दुर्गभाण्डे च सन्नाह पर्पटेति चेति मेदिनी । पुषः ॥ पुष्यतेः करः स्यात् । स च कित् । पुष्करं खे ऽम्बुपद्मयोः । तूर्यवक्त्रे खड्गफले हस्तिहस्ताग्रकाण्डयोः । कुष्ठौषधे द्वीपतीर्थभेदयोश्च न पुंसकम् । ना रागनागविहगनृपभेदेषु वारुणौ इति मेदिनी । कलश्च ॥ पुष्यतेः कलन् कित्स्यात् । पुष्कलन्तु पूर्णे श्रेष्ठे इति हेमचन्द्रः । मन्था इति । पथिमथीत्यात्त्वम । इतो ऽत्सर्वनामस्थाने । मन्था मन्थनदण्डे च वृजे वाते ऽपि च स्मृतः । पन्था इति । पथे गतावस्मात्पचाद्यचि अकारान्तो ऽप्यस्ति । वाटः पथश्च मार्गश्चेति सुभूतिचन्द्रपुरुषोत्तमौ । त्वचि त्वचः किरोऽपि स्यात् किरो प्रोक्तः पथः पथीति द्विरूपेषु विश्वः । इह ऋभवो देवाः क्षयन्त्यस्मिन्निति विग्रहे ऽन्येभ्योऽपि दृश्यते इति डः । ऋभुक्षः स्वर्गवज्रयोरिपि विश्वः ॥ ततो मत्वर्थीये इनिः । ऋभुक्षिन्निति नान्तं प्रातिपदिकम् । आत्त्वात्ते । ऋभुक्षा इन्द्रः । ऋभुक्षाणौ ऋभुक्षाण इत्युज्ज्वलदत्तः । दशपाद्यान्तु अर्त्तेर्भुक्षक्षिन्नागति सूत्रमुपन्यस्तम् । ऋभुक्षणामिन्द्रमाहुवऊतयइति मन्त्रस्य वेदभाष्ये ऽपि तत्सूत्रमुदाहृतम् । अत्रायं विवेकः । आद्यमन्त्रे ऽन्तोदात्तत्वं व्याख्यम् । अवग्रहाभावो बाहुलकात् । द्वितीये तु अवग्रहाभावो व्याख्यः । अन्तोदात्तस्तु बाहुलकादिति । खजाक इति । खज मन्थे

---

तृतीयः ॥ कुशपुत्रे । रामपौत्रे । गजकर्णिका । गजशुण्डाग्रम् ॥

भावः । अनुबन्धमिसत्र उपसर्गस्य घञीति दीर्घः । एतद्गुणादिषु शास्त्रं शासितव्यम् ॥

भूते ऽपि दृश्यन्ते ॥ नन्वेवं वर्त्तमानग्रहणमेव निवर्त्यताम् । इद-ञ्चोत्तरञ्च सूत्रन्त्यज्यतामविशेषात्कालत्रये प्रत्ययलाभादिति चेत् सत्यम् । बाहुल्येन वर्त्तमाने, क्व चिदेव भूतभविष्यतोरिति विवेकप्रदर्शनायेदमित्याहुः ॥

तुमुन्ण्वुलौ ॥ क्रिया अर्थः प्रयोजनं यस्याः सा क्रियार्था तस्याम । अत्रायं सिद्धान्तः । तुमुन्ण्वुलोः कृत्त्वाविशेषे ऽपि अव्ययकृतो भावे इति वचनाद् भावे तुमुन् । ण्वुल् तु कर्त्तरि । प्रकृत्यर्थस्य उद्देश्यत्वन्तु प्रत्ययद्योत्यम् । तच्च संसर्गः प्रकारो वा मतभेदेन । लिङ्विधौ भाष्ये विद्ध्यादीनां वाच्यत्वमिति पक्षस्याप्युक्ततया तद्रीत्या इहोद्देश्यत्वं प्रत्ययार्थः । प्रकृत्युपपदार्थयोः समानकर्त्तृकत्वमपीहाभिधानबललभ्यं प्रयोगोपाधिः । तुमुन्प्रकृत्यर्थस्तु उपपदार्थं प्रति विशेषणम् । ण्वुलि प्रकृत्यर्थो ण्वुलर्थे ण्वुलर्थस्तु कारकद्वारा उपपदार्थे विशेषणम् । कृष्णं द्रष्टुमिति । कृष्णकर्मकभविष्यद्दर्शनार्थमित्यर्थः । दर्शको यातीति । भविष्यद्दर्शनकर्त्तृकन्तदुद्देश्यकञ्च यानमित्यर्थः । क्रियायाङ्किम् । भिक्षिष्ये इत्यस्य जटाः । इह भिक्षार्था जटाः, ताश्च द्रव्यं न तु क्रिया । भिक्षितुं जटा इति प्रयोगस्तु धारयतीत्यध्याहारेण योज्यः । क्रियार्थायाङ्किम् । धावतस्ते पतिष्यति दण्डः । अस्त्यत्र धावतीति क्रिया न त्वसौ दण्डपातनार्था । उद्देशेन हि तादर्थ्यं विविच्यते, न हेतुत्वमात्रेण ॥

भावे तुमुन्निति । अत एव तुमर्थे सेसेनिति सूत्रे तुमर्थ इति चरितार्थम् । अत्र च भावो ऽसत्त्वभूत एव । अव्ययार्थे लिङ्गाद्यभावेन प्रत्ययार्थे वैलक्षण्यानुभवात् । भाववचनाश्चेत्यनेन सत्त्वभूते भावे घञादीनामेव विधानाच्चेति भावः । प्रत्ययद्योत्यमिति । उभयत्रापीति भावः ॥ मतभेदेनेति । अर्थाध्याहारवादे संसर्गः, शब्दाध्याहारवादे तु प्रकार इत्यर्थ इत्येके । कर्मप्रवचनीयवद् द्योतकत्वे संसर्गः, प्रादिवद् द्योतकत्वे प्रकार इत्यर्थ इत्यन्ये ! प्रकार एवेति पक्ष एव युक्त इत्याह ॥ लिङ्विधाविति ॥ अभिधानेति ॥ प्रयोगस्वभावबलभ्येत्यर्थः ॥ अनभिधानादन्यत्र प्रयोगो नेति यावत् । प्रयोगोपाधिरिति । समुदायशक्य इत्यर्थः ॥ विविच्यते । गम्यते । तदुद्देश्यकं हि तदर्थमित्युच्यते, न तज्जनकमात्रमित्याशयः ।

समानकर्त्तृकेषु तुमुन् ॥ अक्रियार्थेति । भोक्तुमिच्छतीत्यत्र हि भोजनविषयिणी इच्छा प्रतीयते, न तु भोजनार्था । तदुद्देशेन अनुष्ठीयमानत्वं तादर्थ्यम् । उद्देशश्चेच्छा । न च भोजनेच्छाऽपि तयैवानुष्ठीयते । आत्माश्रयात् । अतः पूर्वेणाप्राप्तिरिति भावः । यत्तु वदन्ति समानकर्त्तृकेष्विति विशेषं समर्पयितुमयमारम्भः । तेन देवदत्तेन भोक्तुमिच्छति यज्ञदत्त इति न भवतीति । अत्रेदं वक्तव्यम् । तुमुन्ण्वुलाविति विधिरपि भिन्नकर्त्तृकेषु नेष्यते । पुत्रं भोजयितुम् । आगच्छतीति वक्तव्ये पुत्रेण भोक्तुमित्यप्रयोगात् । सेयं व्यवस्था शब्दशक्तिस्वाभाव्याद् बहुलग्रहणाद्वा सिद्धेत्यन्यदेतत् ॥ एवं स्थिते प्रकृतसूत्रे तादर्थ्याभावेऽपि विध्यर्थमित्येव ज्यायः ॥ वस्तुतस्तु तन्त्राद्यावृत्त्याद्याश्रयणेन प्रकृतसूत्रं प्रागुक्तेऽपि तुमुनि समानकर्त्तृकतां नियच्छति । सूत्रे विश्वतोमुखत्वस्यालंकरणत्वात् । स्वरितेनाधिकार इत्यादिसूत्राणां भाष्य एव बहुधा योजितत्वात् । लक्ष्यस्य निर्विवादत्वात् । ननु धातोः कर्मण इति सूत्रेऽनभिधानबलेन समानकर्त्तृकादिसंशो वार्त्तिके प्रत्याख्यातः । तत्किमिह तन्त्राद्याश्रयणेनेति चेद् मैवम् । तत्रैव भाष्यकृता अगतिकगतिरेषा यदनभिधानमित्युक्तत्वादिति दिक् । अत्र काशिका । इच्छन् करोतीत्यत्रानभिधानान्नेति । अस्यार्थः । उक्तविषये इच्छन् कर्त्तुमिति न भवति । इच्छन् कर्त्तुमिच्छतीत्यादौ तुमुन्ण्वुलाविति सूत्रेण स्यादेवेति । अत्रेदं वक्तव्यम् । करोतीत्यर्थे तु तुमुनः प्राप्तिरेव नास्ति । तस्य भावार्थकत्वात् । इह च लटा कर्त्तृप्रतीतेः । यत्तु हरदत्तेनोक्तम् इच्छता क्रियत इत्यत्र प्रसङ्ग इति । यच्च परिष्कुर्वन्ति । कर्माविवक्षायां भावे प्रसङ्ग इति तच्चिन्त्यम् । अविवक्षितकर्मणां भावे लो न, किं तु कर्मसामान्य एवेति लः कर्मणिसूत्रस्थस्वग्रन्थविरोधात् । किं च भावे लट्यपि वर्त्तमानका-

न तु भोजनार्थेति । दर्शनेच्छया यथा दर्शनमनुष्ठेयं न तथा भोजनेच्छया इच्छानुष्ठेयेत्यर्थः । इत्येव ज्याय इति । समानकर्त्तृकेष्विति स्पष्टार्थमेवेति भावः ॥ नियच्छतीति । यस्तुमुन्समानकर्त्तृके उपपदे इत्यर्थं द्वितीयस्येति भावः । विश्वतोमुखत्वमनेकार्थत्वम् । इह च लटेति । अन्यथा तदुपादानवैयर्थ्यमिति भावः । नन्वविवक्षितकर्मभ्योऽपि भावे लः षष्ठीप्रकरणस्थभाष्याल्लभ्यते इति न्याय्येऽर्थे स्वग्रन्थविरोधो न दूषणमत आह । किञ्चेति । अपिना कर्त्तर्यपि ।

लता निर्विवादा । न चेयन्तुमुना लभ्यते । किञ्च, इच्छन् कर्त्तुमिति प्रयोगो नेष्यतइति रिक्तं वचः । कर्तुमिच्छन्निति प्रयोगस्य सकलसंमतत्वात् । पदाऽऽनुपूर्व्याश्चाहर पात्रं पात्रमाहरेत्यादाविव स्वेच्छायत्तत्वात् । तुमुन्प्रकृत्यर्थस्योपपदार्थं प्रति विशेष्यतापि स्यादिति चेन्न । आपादकाभावात् । अव्ययकृत्प्रकृत्यर्थानां क्रियान्तरं प्रति विशेषणतायाः क्त्वादौ क्लृप्ततया तथैव व्युत्पत्तेश्चेति दिक् । इच्छासन्नन्तस्य विग्रहे सर्वत्रायमेव तुमुन् प्रयुज्यते । कर्मत्वसमानकर्तृकत्वयोरिच्छाप्राधान्यस्य च सन्नन्ते दृष्टस्येहापि तौल्यात् । वृत्तिसमानार्थकवाक्यस्य न्याय्यत्वादित्यवधेयम् ॥

शकधृष ॥ अयमप्यक्रियार्थोपपदार्थारम्भः । भोक्तुं शक्नोति धृष्णोति जानातीत्यत्र भुज्यर्थो विषयतया संबद्ध्यते । प्रावीण्यञ्च गम्यते । ग्लायतीति तदशक्तिः । घटते अर्हतीति योग्यता । आरभते क्रमते उत्सहते भोक्तुमिति भुजेराद्यावस्था । लभते इत्यप्रत्याख्यानम् । अस्तीत्यादौ तु संभवमात्रम् ॥

भाववचनाश्च ॥ क्रियार्थोपपदे विशेषविहितेन तुमुना स्वविषये घञादीनां बाधे प्राप्ते वचनम् । यागायेति । यष्टुमित्यर्थः । तुमर्थाच्च भाववचनादिति चतुर्थी ॥

पदरुज ॥ पद्यते ऽसाविति करणस्यात्र कर्त्तृत्वविवक्षा बोद्धव्या ।

सृ स्थिरे ॥ सर्त्तेरिति । भ्वादेर्ह्वादेश्च ग्रहणम् । स्थिरे कर्त्तरीति । एतेन स्थिरग्रहणं प्रत्ययार्थस्य कर्तुर्विशेषणं, न तूपपदमिति दर्शयति । अर्द्धर्चादिषु सारशब्दस्य पाठश्चेह प्रमाणम् । व्याधीत्यादि । अस्थिरार्थम् । वि-

नचेयन्तुमुनेति । तत्प्रकृत्यर्थे समभिव्याहृतक्रियापेक्षया भविष्यत्त्वस्यैव प्रतीतेरिति भावः । कर्त्तुमिच्छन्निति कर्त्तुमिच्छन्नस्तीति तदर्थः । अस्येच्छाप्राधान्ये एव प्रवृत्तिरित्यर्थे मानाभाव इति भावः । न्याय्यत्वादिति । तच्चानेनैव तुमुना निर्वहति, न पुनः क्रियार्थेनापीति भावः । अत एव सन्नन्तस्य पठनमिच्छतीति न विग्रहः । समानार्थकलाभेनान्यस्यानौचित्यात् स्पष्टञ्चेदं सन्विधायके भाष्ये ।

अयमपीति । अत एवायं स्वार्थिक इति भूवादिसूत्रे कैयटः ।

बाधे प्राप्ते वचनमिति । यद्यप्ययं भावो ऽसत्त्वभूतो घञादिवाच्यस्तु सत्त्वभूतस्तथा ऽप्यस्यैव विषयविभागस्य स्फुटं बोधनायेदमिति भावः ।

कर्त्तृत्वविवक्षेति । तेनायङ्कर्त्तरीति भावः । इत्यादाविवेति । मितां ह्रस्व

सारो मत्स्य इति। विविधं सरतीति कृत्वा। सारो बलमिति। अत्राप्यन्तर्भावितण्यर्थो धातुः। सारयति चेष्टयतीति कृत्वा। बलवान् हि चेष्टते। अपाणिनीयमिति। श्रमेः शुद्धाद् घञि वृद्धेर्दुर्लभत्वादिति भावः। यदि तु युर्यान् विश्रामयेत्यादाविव णिचि वृद्धिमाश्रित्य णिजन्तादेरच् क्रियते तदा रूपं सिद्ध्यत्येव। अर्थस्तु भिद्यतइति भावः। निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिजिति विवक्षायान्तु न दोष इत्यवधेयम्। अवोद इति। उन्दी क्लेदने अवपूर्वो घञ् नलोपो निपात्यते। एध इति। इन्धेर्घञि नलोपो गुणश्च निपात्यते। न धातुलोपइति प्रतिषेधः स्यात्। ओद्म इति। उन्देरौणादिके मन्प्रत्यये नलोपो गुणश्च। श्रन्थेरिति। प्रपूर्वस्य हिमपूर्वस्य च घाञिति बोद्धव्यम्।

परिमाणाख्यायां सर्वेभ्यः॥ परिमाणं परिच्छित्तिः। आख्यानमाख्या उक्तिः। परिच्छित्तेरुक्तौ सत्यामित्यर्थः। कस्य पुनः परिच्छित्तिः प्रत्ययार्थस्य। तण्डुलनिचाय इति निचीयते राशीक्रियते इति निचायः। अत्र राश्येकत्वेन समुदायिनां परिच्छित्तिर्गम्यते। एरचि प्राप्ते घञ्। निष्पूयते शोध्यते तुषाद्यपनयनेन यस्तण्डुलादिः स निष्पावः। शूर्पेणेति करणतृतीयान्तस्य कर्तृकरणे कृता बहुलमिति समासः। अत्र शूर्पसंख्यया तण्डुलादेरपि परिच्छित्तिः। शूर्पद्वित्वन्तु आर्थिकन्न तु शाब्दम्। यद्यप्यत्र निरभ्योः पूल्वोरिति घञ् लभ्यते तथाऽपि सर्वग्रहणबलादनेनापि भवितुमर्हतीति भावः। मुख्योदाहरणमाह। द्वौ काराविति। कॄ विक्षेपे कर्मणि घञ्। विक्षिप्तो धान्यादिराशिः कारः। इह प्रकृत्याश्रय एवापवादो बाध्यते, न त्वर्थाश्रयः। सर्वेभ्य इति पञ्चमीनिर्देशात्। तेनेह न। एका तिलोच्छित्तिः। कर्मणि भावे वा क्तिन्। ऊर्ध्वीकृतो राशीकृत इत्यर्थः। तदेतत्सूचयितुमजपोरित्युक्तम्॥

दारजारौ॥ यद्यपि दारयतेः पचाद्यचा सिद्धं स्वरश्च तुल्यः कर्षात्वत इति घञ्यप्यन्तोदात्तत्वात्तथाप्यच्कावशक्ताविति स्वरं वारयितुमिदम्।

इत्यत्र वेत्यनुवर्त्य व्यवस्थितविभाषयेति भावः। न धात्विति। अन्यथेत्यादिः।

परिच्छित्तिरिति। इयत्तेत्यर्थः। परिच्छित्तेरिति। तदुक्तिश्चोदाहरणेष्वेकादिशब्दैः स्पष्टैव। समुदायिनामिति। तण्डुलपदेन कर्मधारय इति समुदायिन एव प्रत्ययार्थ इति भावः। तत्परिच्छित्तिश्चैकराशिविषयत्वेनेति बोध्यम्। एरचीति। निश्चाय इति पाठे ग्रहवृदृनिश्चिगमश्चेत्यपो बाध इति बोद्धव्यम्। तत्त्वपरिमाणाख्यायां चरितार्थम्॥ आर्थिकमिति। एवं राश्येकत्वमपि बोद्धव्यम्। कर्मणीति।

णिलुक्चेति । लोपे हि सति घञाश्रया वृद्धिर्न स्यात्। णिलोपस्य स्थानिवद्भावात् । न च णिज्निमित्तैव सा ऽस्तु इति वाच्यम् । जारशब्दे मितां ह्रस्व इति ह्रस्वापत्तेः । लुकि तु सति तस्यापरनिमित्तकत्वात् किलुगुपधेति प्रतिषेधाद्वा स्थानिवत्त्वाभावान्न दोष इति भावः । यत्तु वदन्ति दीर्यन्ते यैस्ते दाराः । जीर्यते ऽनेनेति जार इति अण्यन्ताभ्यामेव करणे घञ सिद्धत्वान्नैतदादर्त्तव्यमिति । तदतिस्थवीयः । अपवादस्य ऋदोरबिसपो विषये उत्सर्गस्य घञो दुर्लभत्वात् । अपवादो ऽपि परेण ल्युटा बाधादिह दुर्लभ इत्यन्यदेतत् ॥ अपादाने स्त्रियामिति । घञनुक्रमणमजपोर्विषये इति वचनात् । स्त्रियामप्राप्तो घञ् विधीयते । उपाध्यायेत्यादि । या स्वयमध्यापयति तस्यामिदं रूपद्वयम् ।पुंयोगे तु ङीषेव ।आनुगागमश्च पाक्षिक इत्युक्तम् । अक्रुतनीशार इति । उपसर्गस्य घञीति दीर्घः ।अथ कथं प्रदक्षिणप्रसव्यगामिनां शाराणामिति । अत्राहुः । अत एव वार्त्तिकप्रयोगाद् अक्षेष्वपि शृणातेर्घञिति ॥

यज्ञे समि स्तुवः ॥ अधिकरण ल्युटो ऽपवादो घञ् ।

प्रथने ॥ विस्तारस्तिर्यगायतिः ॥

छन्दोनाम्नि च ॥ शब्दविषयत्वात्पूर्वेणाप्राप्ते वचनम् । अत्र केचिद् द्वाविति नानुवर्त्तयन्ति तेन प्रस्तारपङ्क्तिरित्यादि सिद्धम् ॥

उदि ग्रहः ॥ घञ् स्यात् । ग्रहवृदनिश्चिगमश्चेति प्राप्तस्यापोऽपवादः॥

इदश्चिन्त्यम् । अकर्त्तरि चेति सूत्रे पर्युदासेनैव कारकलाभे पुनस्तद्ग्रहणं परिमाणाख्यायामित्यस्य कारक एव प्रवृत्तिर्न तु भाव इत्यर्थन्तेनेह न ।एका तिलोच्छ्रित्तिर्द्वे सुती । एवञ्च घञनुक्रमणमजब्विषये । वचनं हि स्त्रीप्रत्ययान्मप्यपवादविज्ञानमिति तत्सूत्रस्थवार्त्तिकं न कार्यमिति भाष्यं सङ्गच्छते । अन्यथा कर्मणि क्तिनो बाधाभावाय तद्वचनस्यावश्यकत्वेन भाष्यासङ्गतिः स्पष्टैव । तस्मात्परिमाणाख्यायां भाव एव क्तिन् न कारके ऽनभिधानादित्यावश्यकम् । अत्रान्यकर्त्तरीत्यनुवृत्त्या तत्प्रत्याख्यानमित्यन्यत् ।

न दोष इति । यद्यपि कादिजॄधातोर्ण्यन्तात्कर्त्तरि घञि तस्यामित्त्वात् णिलोपेनैव सिद्धे लुग्विधानं व्यर्थन्तथा ऽप्येतद्वार्त्तिकभाष्यप्रामाण्यान्न सांप्रदायिकः स इति भावः । नैतदिति । एतद्वचनं न कार्यमित्यर्थः । ल्युटेत्युपलक्षणं घस्यापि । यदि तु नैतदादर्त्तव्यमित्यस्य कर्त्तरीत्यस्य स्थाने करणे इति पठित्वा तत्र घापवादं घञमण्यन्ताद्विधाय णिलुकेत्यंशो नादर्त्तव्य इति व्याख्यायते तदा सम्यगेव । स्पष्टश्चेदं भाष्ये । अक्षेष्वपीति । अक्षकरणकद्यूतसाधनेष्वपीत्यर्थः ।

परिन्योः ॥ परावनु ॥ इह द्विः परिग्रहणङ्क्रियते । सकृदेव तु कर्त्तव्यम् । तथा हि । परौ नियो द्यूते । इणो ऽनुपात्यये । नावभ्रेषे । इति सूत्ररचनाऽस्तु । सत्यम् । तथा न कृतमित्येव ।

व्युपयोः ॥ ननु पूर्वसूत्रेण अनुपात्यये पर्यायशब्दो व्युत्पादितः । एवञ्चेह पर्यायग्रहणं व्यर्थम् । अनुपात्यय इत्यस्यानुवृत्तिसंभवादिति चेत् । अत्राहुः । पर्यायग्रहणं पुनर्विधानार्थम् । तेनाभिविधिविवक्षायां परमपि इनुणं बाधित्वा अयमेव घञ् भवतीति । आकायमिति । आचीयते अस्मिन्नग्न्यादि । अधिकरणे घञ् । अग्निस्थलविशेषाश्चिन्वीत, चयनेन निष्पादयेदिति श्रुत्यर्थः ॥

सङ्घे च ॥ उत्तरे च अधरे च उत्तराधराः । तेषां भाव औत्तराधर्यम् । सूकरेति । स्तनपानाय यदोत्तराधरभावेन सूकराः शेरते तदेदं प्रत्युदाहरणम् । यदा तु भिक्षुवत् पृथक् पृथगेवावतिष्ठन्ते तदेहापि भवत्येव घञ् ॥

कर्मव्यतिहारे ॥ अत्र वर्त्तमानाद्धातोरित्यर्थः । भावे णजिति । कर्तृवर्जिते कारके तु न भवत्यनभिधानादित्याहुः । प्राचा तु भावादावित्युक्तं तदुपेक्ष्यमाकरविरोधात् । व्यावक्रोशीति । क्रुश आह्वाने । हस हसने । णिजन्ताभ्यामञ् । स च कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणमिति परिभाषया सोपसर्गाद्भवति । तद्धितस्वार्थादावृद्धिः । न य्वाभ्यामिति तु, न कर्मव्यतिहारइति निषिद्धम् । स्यादेतत् । स्त्रियां क्तिन्निति प्रकरणे णज्विधेयः । एवञ्च स्त्रियामिति न वाच्यमिति लाघवमिति चेन्मैवम् । अस्त्रियामिति वासरूपविधिपर्युदासापत्तेः । इष्यते हि व्यावक्रुष्टिरिति क्तिन्नपि । ननु येननाप्राप्तिन्यायेन क्तिन एवापवादोऽयम् णच् । युजादयोऽप्येवम् । उभयप्रसङ्गे ऽपवादविप्रतिषेधाद्युजादयः प्राप्नुवन्ति । इष्यते तु णजेव ॥ तद्यथा । व्यावचोरीत्यत्र ण्यासश्रन्थेति युच् प्राप्तः । व्यात्युक्षी ।

अयमेव घञिति । राजसमीपे ऽभिव्याप्य शयनस्य पर्याय इत्यर्थके राजोपशाय इत्यादावपि भावः । अग्न्यादीति । आदिना इष्टकाः । अग्निस्थलविशेषमिति । अग्न्याधारस्थलविशेषमित्यर्थः ।

इष्यते हीति । ध्वनितञ्चेदं वासरूपसूत्रे भाष्ये । प्रकृतसूत्रस्थभाष्यन्तु

अत्र गुरोश्च हल इत्यकारः प्राप्तः । क्वचित्त्वाकार एवेष्यते न तु णच् । व्यतीक्षा व्यतिहेति यथा । सैषा व्यवस्था न्यायतो दुर्लभापि कृत्यल्युट इति बाहुलकेन समर्थनीयेति स्थितमाकरे । एवं व्यात्युक्षीरिति क्विबपि तथैवास्तु । मास्तु च प्रकरणभेदेन स्त्रियामित्युक्तिरिति चेत् । सत्यम् । यावत्संशे बाहुलकं विनैव निर्वाहस्तस्यांशस्य बाहुलकेन निर्वाहं स्वीकृत्य तदुपायानां प्रत्याख्याने घञादिविषयकानेकवचनवैयर्थ्यापत्तेरित्यास्तान्तावत् । सांराविणमिति । समन्तात्स्वशब्द इत्यर्थः । संशब्दो ऽभिविधिद्योतकः । पूर्ववत् सगतिकादयम् । स्वभावतश्चेदमणिजन्तं नपुंसकम् । अनेन नपुंसके भावे क्तो घञ् चेति उभयं वासरूपन्यायेन प्राप्तं पुनर्भावग्रहणसामर्थ्याद् बाध्यते । न च कर्तृभिन्नकारकनिवृत्तये भावग्रहणमिति वाच्यम् । पूर्वसूत्रइव शब्दशक्तिस्वाभाव्यादेव कारके इनुणो ऽप्रवृत्तेः । ल्युटा तु समावेश इष्यते । संवरणमिति । तच्च बाहुलकाल्लभ्यतइत्याकरः ॥

आक्रोशे ॥ ग्रहवृदनिश्चिगमश्चेत्यपि प्राप्ते ऽयमारम्भः । अवग्रहः पतस्येति । छेदावशेष इत्यर्थः । निग्रहो निरोधः । पात्रप्रग्राहेणेति । भिक्षापात्रोपादानेन, पात्रङ्गृहीत्वेति यावत् । लिप्सायाङ्किम् । प्रग्रहो देवदत्तस्य । प्रकृष्टो ऽभिनिवेश इत्यर्थः । निश्चरा कन्येति । ग्रहवृ इत्यादिना कर्मण्यप् । ननु स्त्रीत्वविशिष्टे कर्मणि परत्वात् क्तिना भाव्यम् । अजब्भ्यां स्त्रीखलना इत्युक्तः । अत आह क्तिन्विषये ऽपीति । एवञ्च घञबन्ताः पुंसीति प्रायिकं द्रष्टव्यम् ।

रश्मौ च ॥ रथशकटादिसंबद्धायां रज्जौ रश्मिशब्दो वर्तते, न तु रज्जुमात्रे । इह बहुकृत्वो ग्राहरूपाप्तः । सकृदेव तु वक्तुं शक्यः । तथाहि । उदि ग्रहः । समि मुष्टौ । आक्रोशे वन्योः । प्रेलिप्सायाम् । परौ यज्ञे भे वर्षप्रतिबन्धे । विभाषाऽमे वणिजामित्यादि । परौ भुवोऽवज्ञाने । इत्य-

न्यायानुगृहीततद्भाष्यविरोधादेकदेश्युक्तिरिति भावः । बाध्यतइति । वासरूपइत्यस्य बाधद्वारेति भावः । नपुंसकइत्युत्तरमेव तु न कृतम् । खलर्थविषये भावे खलादयो मा भूवन्निति । अत एव भाष्ये उक्तं ये कस्य बाधकास्तदर्थं पृथग्ग्रहणमिति । आकर इति । भाष्यमित्यर्थः ।

अयमारम्भ इति । घञर्थं इत्यर्थः ।

स्यानन्तरं आङिङ्हल्लत्वोरित्यस्तु । तथा तु न कृतमित्येव । क्तादिनिवृत्त्यर्थमिति परत्वाद्धि क्तल्युटौ प्राप्तौ । तथा च पूर्वविप्रतिषेधो ऽयं फलितः । एवञ्च वासरूपन्यायो नास्ति । अनपवादत्वादिति भावः । वर्षमिति । वृषभो वर्षणादिति भाष्यकारप्रयोगाल्ल्युडपि भवतीति कैयटादयः । एतच्च वृष्टिमात्रविषयकं बोद्धव्यम् । अत एव भीत्रार्थानामिति सूत्रे भयं भीरिति न्यासग्रन्थमुपादाय भयनमिति क्वचित्को ऽपपाठ इत्यनुन्यासादयः ।

ऋदोरप् । नायन्तकारः, किं तर्हि इकारः । निरभ्योः पूल्वोरित्यारम्भाद् इत्याशयेन दीर्घान्तादप्युदाहरति । लवः पव इति । वशिरण्योरिति । घञि प्राप्ते वचनम् । वशनं वशः । रणन्ति शब्दायन्ते ऽस्मिन्निति रणः सङ्ग्रामः । व्यप्यतइति विग्रसः । वैश्वदेवशिष्टमन्नम् । घासश्चतुष्पदां भक्ष्यम् । शष्पं बालतृणं घास इत्यमरः । उपजापो मन्त्रभेदः ।

प्रजने सर्त्तेः ॥ प्रजननं प्रजनः । भावे घञ् । जनिवध्योश्चेति वृद्धिप्रतिषेधः । यद्वा । ण्यन्तादच् । प्रशब्दो ऽत्र धात्वर्थं विपरीतयति । यथा प्रतिप्रुतइत्यत्र प्रादुर्भावस्य वैपरीत्यम् । प्रजनङ्गर्भग्रहणम् । तच्च प्रथमाद्वितीयादिकं त्वत्र नाग्रह इत्येके । हरदत्तस्वरसो ऽप्येवम् । वृत्तौ तु प्रथमग्रहणमिति व्याख्यातम् । उत्तरो ग्रन्थः स्पष्टार्थः ।

भावे ऽनुपसर्गस्य ॥ हव इति । एतेन वायवायाहीत्यस्यामृचि हवशब्दव्याख्यावसरे ह्वयतिधातोर्बहुलं छन्दसीति संप्रसारणं सत्युकारान्तत्वाद् ऋदोरबित्यबिति वदन्तो वेदभाष्यकाराः प्रत्युक्ताः ॥ ड्वितः क्त्रिः ॥ अयमिति । तथा च पाकेन निर्वृत्तानीति विगृह्यते । न तु पचनेनेति । यत्तु प्राचोक्तं भावादाविति तन्नेति भावः ।

क्त्रेर्मप् ॥ तद्धितेषु व्याख्यातमिदम् । नित्यग्रहणादिति । तत्र हि नित्यमिति योगो विभज्यते । तत्सामर्थ्याद्द्विशेषानादरेणैवाबूविषयत्वं निर्णीयते एकयोगत्वे तन्निर्वृत्ते इत्यधिकारात् निर्वृत्तार्थस्य विवक्षायां वाक्यवारणेऽपि तदविवक्षायां स्वातन्त्र्यं प्रसज्येतेति भावः ।

यजयाच ॥ भावे कर्त्तरि कारके च । अत एव यज्ञेन यज्ञमयज-

---

तत्र हिं नित्यमित्यादि । तद्धितेषु व्याख्यातमिदम् ।

न्नेत्यत्र इज्यतइति यज्ञ इति व्याचक्षते ।

उपसर्गे घोः किः ॥ बाहुलकात्कर्त्तर्यपीति माधवः । अत एव उपसमीपे स्वधर्ममादधातीति उपाधिरिति व्याचक्षते । वस्तुतस्तु तत्र करणे प्रत्ययः सुवचः । तदेतदाह । उपाधीयतेऽनेनेति । एवं विधाता विश्वसृड् विधिरित्यत्रापि मा भूत्किः । विध विधाने इत्यस्माविगुपधात्किदिति इना रूपसिद्धेः । स्त्रियाङ्क्तिन् घञोऽपवाद इति । यत्तु प्राचो ग्रन्थं व्याचक्षाणा आहुः । भाष्ये स्वाधिकः कारोऽधिकार इति घञप्युदाहृत इति । तदतिरभसात् । न हि तत्र स्त्रीत्वविशिष्टो भावोऽर्थः, किन्तु पुंस्त्वविशिष्ट इति ध्येयम् । अजपौ त्विति । तयोरवकाशः । चयः । लवः । क्तिनोऽवकाशः । कृतिः । हृतिः । चिनोतिस्तौतिभ्यां स्त्रियामुभयप्रसङ्गे परत्वात् क्तिन्नित्यर्थः ।

श्रुयजि ॥ परत्वात् ल्युटि प्राप्ते वचनम् । श्रुतिः श्रोत्रम् । क्तिन्नपीति । अस्त्रियामिति प्रतिषेधाद् वासरूपविधेरभावादिदमुक्तम् । अङ इति । स्थादिभ्य आतश्चोपसर्ग इति कः ॥ वचेस्तु षिद्भिदादिभ्य इति प्राप्तस्येति भावः । इत्वाभाव इति । द्यतिस्यतीत्यादिना प्राप्तस्येत्वस्याभाव इत्यर्थः । हन्तेरिति । नकारस्येत्वम् । हिनोतेस्तु गुण इति बोद्धयम् । कीर्त्तिरिति । अत्र ण्यासश्रन्थेति युचि प्राप्ते क्तिन्निपात्यते उदात्तत्वञ्च । तां स्तुते कीर्त्तिम् ॥

व्रजयजोर्भावे क्यप् ॥ उदात्त इत्येव । पित्करणन्तु उत्तरत्र तुगर्थम् । गलपार्श्वेति । तत्र हि क्रुद्धो व्रजतइति भावः । भरणं भृत्या । जीविका । कुमारभृत्या गर्भिण्याः परिचर्याऽभिधीयते इति हारावली । कुमारभृत्याकुशलैरधिष्ठिते इति रघुः । सञ्ज्ञायां क्तिन् । मतिः । आप्तुतिः ।

करणे इति । न च परत्वाल्ल्युटो बाधापत्तिर्बाहुलकेन तदप्रवृत्तेः । अत एव प्रस्थादावधिकरणे क उक्त आकरे । व्यञ्जना व्यक्तिरित्यादयः । करणे क्तिन् । युजाद्यन्ता अपि बाहुलकेनैव बोध्याः ।

प्राप्तस्येति भाव इति । पुरस्तादपवादन्यायेनेति भावः । तेन ण्वुलिञोः स्थायिकापस्थायति सिध्यति । नकारस्येति । स्तम्बे क चेति सूत्रस्थभाष्यादिदं लभ्यते । अत्रेति । कीर्त्तयर्थत्वादिति भावः ।

भरणं भृत्येति । अस्मादयं भाव एवेति भृञो ऽसञ्ज्ञायामिति सूत्र-

भूतिः । तथा च व्यवहृतम् । मतिबुद्धिपूजार्थेभ्यश्च ॥

कर्मणि भृतौ ॥ रजःकृष्यासुतीत्यादि । एतेन उक्तसौत्रप्रयोगादेव एषा साधुरिति दुर्घटाद्युक्तिः मन्युक्ता । क्रियेति । यदा भावकर्मणोः शः तदा सार्वधातुके यक् । रिङ् शयग्लिङ्क्ष्विति रिङादेशः । अन्यत्र तु यगभावे शेपरतो रिङादेशे कृते इयङ् ॥

इच्छा ॥ भावइति । न त्वकर्तरि कारकेऽपीत्यर्थः। परिचर्येति। कथन्तर्हि धन्यानां विरजस्तमा भगवती चर्येयमाह्लादते इति मुरारिः। अत्र केचित् । गदमदचरेति यत् । न च वासरूपविधेः स्त्र्यधिकारे पर्युदासात् क्तिना यतो बाधः स्यादिति वाच्यम् । बाध्यबाधकयोर्द्वयोरपि स्त्र्यधिकारस्थत्वे सत्येव स्त्रियामिति पर्युदासप्रवृत्तेः । अत एव काशिकायां कथमास्येत्याशङ्क्य ऋहलोर्ण्यदिति समाधाय वासरूपविधिप्रतिषेधस्तु स्त्रीप्रकरणविषयस्यैवोत्सर्गापवादस्येत्युक्तमित्याहुः । अस्मिंश्च पक्षे घञादयो ऽपि स्त्रियां स्युः । तथा च "क्तल्युण्नपुंसके भावे स्त्रियां क्तिन्नादयो यतः । अतो घञजपः पुंसि परिशेषादिति स्थिति"रिति सिद्धान्तो व्याकुप्येत । अतो ऽपवादमात्रस्य स्त्र्यधिकारस्थत्वे ऽपि वासरूपविधिर्नेत्येव न्याय्यम् । अस्या चर्या इत्यादि तु बाहुलकादिति दिक् । पकारनिवृत्तिरिति । हलादिःशेषस्तु नास्ति । षाष्ठ द्वित्वे धातुद्वित्वे वा ऽभ्याससञ्ज्ञास्वीकारात् । इह तु तदुभयाभावादिति भावः । अटाट्येति । यदा तु यङन्तादप्रत्ययादित्यकारस्तदा अतो लोपे यलोपे च अटाटेति बोद्धव्यम् । जागर्येति । सार्वधातुके यक् । जाग्रो ऽविचिण्णलिति गुणः ।

गुरोश्च हलः ॥ प्रकृतस्य धातोर्हला विशेषणात्तदन्तविधौ हलन्तधातोर्लभ्यते । न चायं गुरुरिति संभवति । अजिवशेषो हि गुरुः । अतो

---

स्यभाष्यस्वरसः ।

अन्यत्र त्विति । सम्प्रदानादौ । ताभ्यामन्यत्रेत्यस्य तु नात्र विषयस्तत्रोणादिशब्देन प्रसिद्धोणादिपाठस्थानां विधेयसमर्पकोणुघटितवाक्यानामेव ग्रहणादित्यन्यत्र प्रपञ्चितम् । अत एवोपाध्याय इत्यत्रापादाने घञिति इङश्चेत्यत्र भाष्ये ध्वनितम् । करणाधिकरणयोस्तु न शो ल्युटा बाधादिति दिक् ।

इत्येव न्याय्यमिति । किं च यण्यतोरपि पित्रर्थार्थकयोः स्त्रीत्वाद् बाहुलकाश्रयणमावश्यकम् । किं च वासरूपसूत्रे ऽस्त्र्यपदेनापवादस्यैव ग्रह-

मत्वर्थो लभ्यते तदाह । गुरुमत इति । ननु विपरीतमस्तु । गुर्वन्ताद् हलन्त इति । मैवम् । चेष्टायामनद्यतनि । आशंसायां भूतवच्चेत्यादिनिर्देशात् ॥

षिद्भिदादिभ्योऽङ् ॥ कथन्तर्हि "मधुसुरभिमुखाब्जगन्धलब्धे"रिति माघः । प्रेक्षोपलब्धिरित्यमरश्च । षित्त्वादङि लभेत्येव स्नुचितम् । सत्यम् । अनर्थकास्तु प्रतिवर्णमर्थानुपलब्धेरिति भाष्यवार्त्तिकप्रयोगात् बाहुलकाद्वा क्तिन्नपि बोध्यः । एतेन ज्ञप्तिरुपास्तिरित्यादयोऽपि व्याख्यातारः । वृत्तिकृता तु क्तिन्नावादिभ्य इति वचनं पुरस्कृत्य सर्वं समाहितम् । एवङ्कण्ड्वादियगन्तस्य कण्डूतिक्तिन्समर्थितः । किन्त्वेतत्सर्वं भाष्याविरोधादुपेक्ष्यम् । तथा हि । अवादिभ्यश्चेतिक्तिनमुपसंख्याय निष्ठायां वा सेटो ऽकारवचनात्सिद्धमिति ब्रुवतो वार्त्तिकारस्य गुरोश्च हल इति प्राप्तिस्थल एवं अवादिभ्यश्चेति क्तिन्नभिमतः । तत्कथं लभेत्यङो विषये उपासनेति युचश्च विषये स्यात् । अथापि अवादेराकृतिगणत्वं स्वीकृत्य बाहुलकलभ्यो ऽपि अवादिकुक्षौ निक्षिप्येत । उपेयप्रातिपत्त्यर्था उपाया अव्यवस्थिता इति न्यायात् । तथा ऽपि कण्डूतिरिति क्तिन्नन्तोदाहरणमशुद्धमेव । न पदान्तसूत्रस्थभाष्यविरोधात् । तत्र हि कण्डूतिरित्युदाहृत्य नैतदस्ति प्रयोजनम् । कण्डूयेत्येव भवितव्यमिति निर्द्धार्य क्तिच्क्तौ चेति क्तिचि ब्राह्मणकण्डूतिरित्युदाहृतम् । न चैवंविधे भाष्यकृद्भिरेव स्पष्टं निराकृतेऽर्थे बहुलग्रहणं प्रभवति । एतेन वृत्तिकारानुगामिनः प्राचो ग्रन्थः प्रत्युक्त इत्यवधेयम् । भिदेति । एवमादयः। अजन्ताः समुदाया एव गणे पठ्यन्ते । तत्र ये प्रकृतिभागास्ते भिदादिशब्देन सूत्रे निर्दिष्टाः । गणे विशिष्टपाठस्तु लोकसिद्धार्थविशेषकस्य क जिदलाक्षणिककार्यस्य सङ्ग्रहार्थः । प्रकृतयस्तु भिदिर् विदारणे । छिदिर् द्वैधीकरणे

गेनाक्रियामित्यस्यापि तद्विशेषणतैव व्याख्येति बोध्यम् । मत्वर्थो लभ्यत इति । मतोः सौत्रो लुगिति तत्त्वम् ।

व्याख्यातार इति । बाहुलकादिति भावः । निष्ठायां वा सेट इति । न चैवमाशंसेत्यनुपपन्नमिति वाच्यम् । आशंसायामिति निर्देशेनानित्यत्वस्वीकारात् । तत्र लोकप्रसिद्धार्थविशेषानाह । द्वैधीकरण इत्यादि । धातावित्यर्थबुद्धिरित्याद्यभिप्रायम् । अलाक्षणिककार्याण्याह पञ्चसु ऋदृश इति । इदमुपलक्षणम् ऋजेः पाक्षिकवृद्ध्यभावः कृपेः सम्प्रसारणमित्यपि बोध्यम् ।

विदज्ञाने । क्षिप प्रेरणे । गुहू संवरणे । डुधाञ् धारणपोषणयोः । मेदृमिदृहिंसाक्लेशनयोः । ऋ गतौ । हृञ् हरणे । क्षि क्षये । क्षि निवासगत्योरिति च । तॄ प्लवनतरणयोः । धृञ् धारणे । लिख अक्षरविन्यासे । चुद प्रेरणे । पीड अवगाहने । डुवप् बीजसन्ताने । वस निवासे । मृजू शुद्धौ । कृप कृपायामिति वेदितव्याः । भित्तिरन्येति । भिद्यतइति भित्तिः कुड्यम् । छिदेति । द्वैधीकरणे । अन्यत्र तु च्छित्तिश्छिद्रम् । गुहा दरी औषधिविशेषश्च । अन्यत्र रूढिः । आर्यन्ते अनया अश्वा आरा प्रतोदः । आर्तिरन्या । आराहाराकारातारधारेति पञ्चसु, ऋदृशो ऽङीति गुणे दीर्घत्वं निपात्यते । लिखेस्तु गुणः । लकारस्य पक्षे रेफश्च । रेखा लेखा । चुदेर्डत्वञ्च चूडा ॥

चिन्तिपूजि ॥ चकारो ऽनुक्तसमुच्चयार्थः । तेन तोलयतेस्तुलेति हरदत्तः । घट्टिवन्दि ॥ विदिर् लाभार्थो गृह्यते । ज्ञानार्थस्य तु संवित्तिः । विद चेतनाख्याननिवासेष्विति चुरादिना ज्ञाने ऽपि सिद्धम् । प्रच्छर्दिकेति । छर्द वमने । प्रवाहिकेति । प्रवाहयति मुहुर्मुहुः प्रवर्त्तयतीति ग्रहणी । विचर्चिकेति । पामा । चर्च अध्ययने । प्रत्ययोपसर्गाभ्यां रोगप्रतीतिः । शिरोऽर्त्तिरिति । शिरःपीडा । अर्द हिंसायाम् । तितुत्रेति नेट् । आशिका शायिकेति । आसनं शयनम् इत्यर्थः । इकृश्तिपौ । धातोर्निर्देशो ऽनुकरणम् । बहुलमित्यनुवृत्तेः क्व चिन्न । गुप्तिज्किद्भ्यः सन् । पचतिरिति । उपसर्गात्सुनोतिसुवति, ध्यायतेः संप्रसारणं चेत्यादिनिर्देशादकर्तृवाचिन्यपि परे शबादयः । एवं भावकर्मवाचिन्यपि क्व चिद्यक् । विभाषा लीयतेरिति यथा । तत्र हि लीलीङोर्यकानिर्देश इत्युक्तम् । यत्तु प्राचा श्तिकरणसामर्थ्याच्छबादय इत्युक्तन्तन्न । पिबतिर्ग्लायतिरित्यादौ पिबाद्यादेशप्रवृत्त्या आत्वनिवृत्त्या च शित्त्वस्य चरितार्थत्वाद् वर्णादिति । वर्णानुकरणादित्यर्थः । न तु

लाभार्थ इति । सकर्मकाकारविकरणवन्दिसाहचर्याद् व्याख्यानाच्चेति भावः । बहुलमिति । अत एव क्व चिद्धात्वर्थनिर्देशे ऽपि । पृच्छतौ सुस्नातादिभ्य इति वार्त्तिकप्रयोगात् । अत एवेक्षतेर्नाशब्दमिति व्याससूत्रं सङ्गच्छते । आत्वनिवृत्त्या चेति । इदं तु तितुत्रेत्यनेनापि सुशकयवारण इति भावः । इकः कित्त्वेपि वचिस्वपीत्यादौ न संप्रसारणं प्रसिद्धत्वेन शब्दातिरिक्तार्थपरेष्वेव तत्प्रवृत्तेरिति बोध्यम । इगित्यत्र चरत्वंभूतो गकारः पुनर्निर्दिष्ट इत्यन्ये । वर्णानुकरणादिति ।

वर्णादुच्चार्यमाणादिति । तथा हि सति आकार इत्यादावेव स्यात् । न तु ककार इत्यादौ सङ्घातस्योच्चारणात् । अनुकार्यन्त्विह वर्णमात्रम् । अकारस्योच्चारणार्थत्वात् कथन्तर्हि एवकारश्चकार इत्यादि । अत्राहुः । क चित्सङ्घातादपि । वषट्कार इति सूत्रनिर्देशात् सर्वे चकाराः प्रत्याख्यायन्तइति भाष्यात् । बहुलवचनाच्चेति । वस्तुतस्तु विभाषाऽग्रे प्रथमपूर्वेषु कर्त्तरि कृदित्यादौ पुनः पुनर्भाष्यकारैरुक्तत्वात् । एवकारः साधुश्चकारवत् । इह कारप्रत्ययस्य धातोरविहितत्वे ऽपि अधिकारबलात् कृत्सञ्ज्ञा तेन कृदन्तत्वात् प्रातिपदिकत्वं प्रयोजनाभावान्न ककारस्येत्सञ्ज्ञा । आर्द्धधातुकसञ्ज्ञाभावान्नेट् । अस्य च्वात्रित्यादौ न प्रत्ययो बाहुलकादेव । रादिफः ॥ वासरूपविधिना ऽकारोपि । रकारादीनि नामानि शृण्वतो मम पार्वति । अकारलोप इति । अतद्धितपरत्वाच्च यस्येति लोपस्याप्राप्तिः । प्रातिपदिकत्वन्तु कृदन्तत्वात्पूर्ववद् बोद्धव्यम् । बाहुलकान्नेह च्छः । तसौ मत्वर्थे इति । बाहुलकादेव मतुवर्थशब्दादपि । शैपिकान्मतुवर्थीयादिति यथा । अन्ये तु नैतत् कृदन्तम् । किन्तु मतुवर्थे भावे इति विगृह्य गहादित्वाच्छे तद्धितान्तमेवेत्याहुः ।

इणजादिभ्यः ॥ धात्वर्थनिर्देशे ण्वुलो ऽपवादोयम् । एवमग्रेपि । आजिरिति । बाहुलकादजेर्वीभावो न ॥

सञ्ज्ञायाम् ॥ अधिकरणे ण्वुलर्थ आरम्भः । उद्दालकः श्लेष्मातकः । तस्य पुष्पाणि भज्यन्ते यस्याङ्क्रीडायां सा तथा ॥

विभाषाऽऽख्यानपरिप्रश्नयोरिञ् च ॥ अल्पाच्तरत्वेन सूत्रे आख्यानशब्दस्य पूर्वनिपाते ऽपि आख्यानस्य प्रश्नपूर्वकतया आर्थक्रममनुसृत्य व्याचष्टे । परिप्रश्ने आख्याने चेति । परिपाटीति । पट गतौ । परिपूर्वः । इणजादिभ्य इतीण् । कृदिकारादिति ङीष् । आक्रोशः शपनम् ॥

---

प्रतिपादनार्थकार्निर्देशपदानुवृत्त्या वर्णस्यैव यत्र प्रतिपादनं तत्रैवायमिति भावः । चकार इति । सूत्रे चकारो विवक्षित इत्यादौ समुदायप्रतिपादने तात्पर्यादिति भावः । उक्तश्चकारकरणस्य प्रयोजनमिति विभाषा वृक्षमृगेति सूत्रस्थभाष्यप्रयोग इत्यपि बोद्धव्यम् । एतेन करणं कारश्चस्य कार इति समासेनेदं सिद्धमित्यपास्तम । नन्वाकारपरत्वात्स्याल्लोपो ऽत आह । अतद्धितपरत्वाच्चेति । गहादित्वाच्छ इति । मत्वर्थीयस्याप्येवं सिद्धाविदं वचनं व्यर्थमित्यन्ये ।

तस्य पुष्पाणीति । नित्यङ्क्रीडेति समासः ।

नपुंसके भावे क्तः ॥ ननु तयोरेव कृत्यक्तखलर्था इत्येव सिद्धम् । अत्राहुः । भूते इत्यधिकृत्य निष्ठेति सूत्रेण विहितस्य क्तस्य भावो ऽर्थस्तेन विहितः । अनेन तु कालसामान्ये नपुंसके भावे क्तो विधीयते । अत एवायं स्वविषये परत्वात् घञजपां बाधकः । परिशेषात्तेषां पुंविषयत्वं सिध्यतीत्युक्तम् । स्यादेतत् । इह भावे चाकर्मकेभ्य इत्यस्यासन्निधानात्सकर्मकेभ्यो ऽप्ययं स्याद् यज्ञादिवदिति चेत् । इष्टापत्तिः । गतन्तिरश्चीनमित्यादिदर्शनात् । नन्वेवन्तद्योगे कर्मणि द्वितीया स्यात् । कृद्योगलक्षणषष्ठ्या न लोकेति निषेधात् । एवञ्च घटङ्कृतं वृक्षं छिन्नमित्यादि प्रसज्ज्येतेति चेत् न । नपुंसके भावे क्तस्य योगे षष्ठ्या उपसंख्यातत्वात् । ननु शेषविवक्षामाश्रित्य प्रत्याख्यातं तदाकरे इति चेत् तर्हि तत्प्रामाण्यात्तत्र प्रायेण शेषविवक्षैवेत्यस्तु । क्व चित्तु द्वितीया ऽपि दृश्यते। भ्रान्तं देशमनेकदुर्गविषममिति तथा । अन्ये त्वाहुः। अयमपि क्तो ऽकर्मकेभ्य एव । तथा हि । तयोरेवेति सूत्रे भावे चाकर्मकेभ्य इत्यनुवृत्तं वाक्यभेदेन व्याख्येयम् । तद्यथा । कृत्यादयो ये तत्तत्सूत्रविहितास्ताननूद्य भावकर्मणोरेवेत्यर्थविधायकमेकं वाक्यं तेन। निष्ठेति विहितस्य क्तस्य भावो ऽप्यर्थो लब्धः । अनुवृत्तेन वाक्यान्तरेण तु भावे यो ऽयं क्त इत्यनूद्याकर्मकेभ्य इति विषयो व्यवस्थाप्यते । स चानुवादो निष्ठेति नपुंसके भावे क्त इति च विहितयोः क्तप्रत्यययोराविशिष्टः । आशितः कर्त्तेति सूत्रस्थं भाष्यकैयटादिकञ्चात्रानुगुणम् । अस्मिंश्च पक्षे अविवक्षितकर्मत्वेना-

---

इत्येव सिद्धमिति । एवञ्चात्र भाव इति व्यर्थमिति शङ्काशयः । अत एवेति । कालसामान्ये विधानादेवेत्यर्थः । असन्निधानादिति । विशेष्यार्थनिर्देशेन तयोरेवन्यस्याप्रवृत्तेरिति भावः । प्रायेणेत्यस्य कृत्यमाह । क चित्त्विति । अत्र पक्षे ऽरुचिबीजन्तु अत्र भावग्रहणवत्कर्तृकारकव्यावृत्त्यर्थङ्कृत्यल्युट इति तावद्धात्रे अकर्त्तरि कारके इत्यनुवर्तनइत्यर्थस्त्वेतद्भावग्रहणमूलक एवेति तद् ध्वनयन्नाह । अन्ये त्विति । ननु तस्य सूत्रस्य भावे एव तत्र चाकर्मकेभ्य एवेत्यर्थद्वये तात्पर्ये ऽप्याद्यांशस्य फलाभावादप्रवृत्तौ तत्सहचरितेतरांशस्याप्यप्रवृत्तिरत आह । तथा हीति । भावो ऽपीति । अपिना कर्म । अत एव तद्विधायके कर्त्तरीत्यस्य न संबन्धः । अविशिष्ट इति । शीतः क इतिवदस्यापि पूर्वमुपस्थितेस्तुल्यत्वादिति भावः । आशितः कर्त्तेति । तद्धि आशितशब्दे आद्युदात्तविधायकम् । तत्र हि कर्त्तरि क्तो निपातनादिति भाष्ये उक्तम । सकर्मकत्वादस्यः कर्त्तर्यप्राप्तः क्तो निपात्यतइति कैयटे उक्तम् । यदि तु अयं सकर्मकेभ्यः स्यात्त-

ऽकर्मकतामाश्रित्य, गतम्, भुक्तमित्यादि समर्थनीयमिति दिक् ॥

कर्मणि च ॥ कर्त्तुरिति कर्मणि षष्ठी। उभयप्राप्तौ कर्मणीति नियमात्। येनेति तृतीया तदाह । येन स्पृश्यमानस्येत्यादि । नपुंसके भावे इति बोद्धव्यम् । अत एवाह । पूर्वेणेति । नेहेति । णिजर्थं प्रतीति भावः ।

करणाधिकरणयोश्च ॥ येन नाप्राप्तिन्यायेन घञो ऽपवादोऽयम् । एरजादीन् स्त्रीप्रत्ययांश्च परत्वाद् बाधेत । उक्तं हि । "अजब्भ्यां स्त्रीखलनाः स्त्रियाः खलनौ विप्रतिषेधेने"ति । आकुर्वन्तीति । एत्य कुर्वन्ति व्यवहारमस्मिन् स आकर उत्पत्तिस्थानम् । गोचरो देश इति । तथा च भारविः । उपारताः पश्चिमरात्रिगोचरादिति । विषयपर्यायो ऽप्ययम् । तथा च प्रयुञ्जते । उपादानगोचरं ज्ञानमिति । सञ्चरन्ते ऽनेनेति । समस्तृतीयायुक्तादित्यात्मनेपदम् । एतेन सञ्चरन्तीति प्राचः परस्मैपदपाठः प्रत्युक्तः । अवहार इत्यादि । वृत्तिकारस्तु आधाराचायशब्दौ सूत्रे प्रक्षिप्य चकारेणावहारशब्दं सञ्जग्राह । तत्र वैरूप्यं निर्मूलम् ॥

अवङ्को ऽनुदके ॥ हलश्चेति सिद्धे उदकप्रतिषेधार्थं वचनम् । उदकोदञ्चन इति । ननु पुंसि सञ्ज्ञायामिति घे प्राप्ते घञ् विहितः । उदके तु घञि प्रतिषिद्धे घ एव स्यादिति चेन्नैवम् । प्रतिषेधसामर्थ्याद् घस्याप्रवृत्तेः । न हीह घे घञि वा रूपे विशेषोऽस्ति । न च स्वरे विशेषः । घे हि सति कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तता घञ्यपि थाथादिस्वरेण तथैवेति। जालम् । जल घातने । ज्वलितिकसन्तेभ्यो ण इति जालशब्दः सिद्धः । अतस्तन्निपातनमिह न शङ्क्यम् ॥

खनो घ च ॥ घित्करणमिति । न हि खनश्चजोरिति कुत्वार्हः

त्वा भावे क्तं कृत्वा तत अर्शआद्यचि कर्त्रर्थकत्वसंभवान्निपातनपर्यन्तधावनं व्यर्थं स्यादिति भावः । किं च कर्त्तृकर्मणोरिति सूत्रे कृतपूर्वी कटमित्यत्र भावे क्तसिद्धये ऽविवक्षितकर्मकत्वाश्रयणं भाष्ये कृतं तदसङ्गतिरित्यपि बोद्धव्यम् । समर्थनीयमिति । ग्रान्तं देशमित्यपि कृतपूर्वी कटमितिवद्भावे क्ते साधु । वस्तुतस्तत्र गत्यर्थत्वात्सकर्मकत्वे ऽपि भावे क्तः । तेन तेभ्यो विशिष्य तयोरर्थयोस्तद्विधानात् । तयोरित्यत्र न तस्य ग्रहणम् । पूर्वोपस्थितैः क्तैस्तस्य निराकाङ्क्षत्वाद् इत्यलम् । कर्मणीति । संस्पर्शादित्यपेक्षयेति भावः । कर्त्तृत्वञ्च प्रत्यासत्त्या विधेयप्रकृत्यर्थनिरूपितं बोद्धव्यम् ।

कश्चिदनागतो ऽस्ति येन धिक्करणमिहोपयुज्येतेति भावः । एतइति । आखनादयः षाडसर्थः ॥

ईषद्दुःसुषु ॥ इह सामान्योक्तावपि योग्यताबलाद् विशेषणस्य विषयविभागो लभ्यते । कृच्छ्रार्थे दुरिति । अकृच्छ्रार्थयोरितरयोरिति । तदेतद्दर्शयति । कृच्छ्रे दुष्कर इत्यादिना । भवतेति । न लोकेति षष्ठीनिषेधात्कर्तरि तृतीया । कृच्छ्रेत्यादि किम् । ईषत्कार्यम् । अल्पमित्यर्थः । निमीति । मीनातिमिनोतिदीङां ल्यपि च । विभाषा लीयतेरिति प्राप्तं निषिध्यते । निमय इत्यादि । एरच् ॥

उपसर्गात् खल्घञोः ॥ लभेश्चेत्यत्र सिद्धे नियमार्थमिदम् । उपसर्गादेव खल्घञोरिति तदेतदाह । उपसर्गादेवेति ॥

कर्त्तृकर्मणोश्च भूकृञोः ॥ चकारः सन्नियोगार्थः । यदा कर्त्तृकर्मणोरीषदादीनाञ्च युगपत् प्रयोगः तदा प्रत्ययो यथा स्यात् । न च कर्त्तृकर्मणोः प्रत्ययार्थत्वमेवास्त्विति वाच्यम् । तथात्वे ईषदादीनामेवोपपदत्वात् खलः खित्त्वस्य वैयर्थ्यापत्तेः । मुमर्थं हि तत् । मुम् चानव्ययस्य विधीयते । तस्मात्कर्त्तृकर्मणोरप्युपपदमेव । तदेतदाह । ईषदादिषु चेति । इह कर्त्तृकर्मणी द्वे भूकृञौ च द्वौ तयोर्यथासंख्यं प्राप्तं स्वीकृतञ्च तथैव वृत्तिकृता । अनुसृतञ्च तदेव न्यासकारहरदत्तमाधवादिभिः । एवञ्च प्राचापि तथैवोक्तम् । तद्दूषयितुमारभते नानुमोदितव्यमिति ध्वनयन्नाह । यथासंख्यं नेष्यतइति । एतच्च यथासंख्यसूत्रे भाष्य एव स्पष्टमिति भावः । स्यादेतत् । च्व्यर्थयोरिति तावद् इहैव सूत्रे भाष्यवार्त्तिकयोः स्पष्टम् । एवञ्च यथासंख्यनिराकरणस्य फलन्दुर्वचम् । न हि भवतेः कर्मणि सम्भवः प्रायेणाकर्मकत्वात् । प्राप्त्यनुभवादिषु सकर्मकत्वे ऽपि च्व्यर्थासङ्गतेः । नापि करोतेः कर्त्तरि संभवः । च्व्यर्थासङ्गतेरेवेति चेत् । तत्किं यथासंख्यसूत्रस्थं भाष्यादिकमिति ब्रूषे । ननु तस्य गतिं पृच्छामीति

परजिति । पचाद्यचो ऽप्यत्र ग्रहणमित्यन्ये ।

उपसर्गादेवेति । खल्घञोरेवेति नियमस्तु न व्याख्यानादिति भावः ।

वैयर्थ्यापत्तेरिति । किञ्च चो ऽपि व्यर्थः । यदुक्तरञ्चशब्दस्तत्सदृशसमुच्चयाङ्गीकारेणोपपदसमुच्चयासम्भवादित्यपि बोद्ध्यम । च्व्यर्थासङ्गतेरिति । अभूततद्भावस्य सत्तार्थे एव सम्भवो, न तु प्राप्त्यर्थे । एवमघटो घटः करोतीत्यर्थे

चेच्छृणु । अन्तर्भावितण्यर्थस्य भवतेः करोतिना कर्मकर्तृविषयस्य करोतेश्च भवतिना तुल्यार्थतया भवतेः कर्मणि करोतेः कर्तरि चोपपदे खल्प्रसक्तिसिद्धेरेव यथासंख्यनिराकरणस्य फलमित्यवधेहि । स्यादेतत् । उपपदयोर्मध्ये पूर्वापरीभावव्यवस्था न सिद्ध्यति । कर्तृकर्मणी हि भूकृञोरव्यवहिते इष्येते । विपरीतश्च प्राप्नोति । ते प्राग्धातोरिति वचने सुदुरोः प्राक्त्वाभावात् । न च व्यवहिते ऽपि प्राक्त्वमस्त्येवेति वाच्यम् । छन्दसि परे ऽपि व्यवहिताश्चेति सूत्रारम्भेणेहाव्यवहितप्राक्त्वमेवार्थ इति स्वीकारात् । न चैवं खलः खित्त्वस्य वैयर्थ्यं स्यादिति वाच्यम् । कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणमिति सुदुर्भ्यां विशिष्टस्य खिदन्ततया ततः पूर्वस्य कूलमुद्रुजादाविव मुमः संभवात् । किं च ईषच्छब्दस्य गत्यादिगणपाठाद्धि-ग्रहणेन ते प्राग्धातोरेतत्सूत्राविषयतया व्यवहितप्रयोगसंभवेन तत्र मुमर्थं खित्त्वमस्तु । तस्मादिष्टव्यवस्था कथं लभ्येतेति चेत् । अत्राहुः । बहुलग्रहणानुवृत्त्या दुराढ्यम्भवमित्यादिभाष्योदाहरणाच्च इष्टव्यवस्थासिद्धिरिति । तदेतत्सकलमभिप्रेत्याह । कर्तृकर्मणी चेति । भवतेः कर्तर्युदाहरति । अनाढ्येनेति । कर्मणि तु अनाढ्य आढ्यो भूयतइति विग्रहः । भाव्यतइति तदर्थः । एवमग्रे ऽपि विग्रहद्वयमुन्नेयम् । यत्तु प्राचा अदुराढ्येन भूयतइत्यादि विगृहीतम् । तन्न । ण्यर्थविशेषकस्य दुर आढ्यशब्देन सह सामर्थ्याभावात् समासायोगात् । प्रत्युदाहरणे तु ते प्राग्धातोरित्यस्य निर्बाधत्वादाह । भूयतइति । काशिकायान्तु स्वाढ्येन भूयतइत्युक्तन्तत्प्रामादिकमिति हरदत्तः ॥

क्तिच्क्तौ ॥ प्राचा तु क्तिच्कृतौ चेति पठित्वा क्तिच् कृच स्यादिति व्याख्याय कृदुक्तिः क्तिचा बाधा मा भूदिति पठितं तदाकरविरोधादुपेक्ष्यम् । क्तिचश्चकारो, न क्तिचीति विशेषणार्थमिति प्राञ्चः । तन्न ।

घटीकरोतीत्यस्यासम्भव इति भावः । अव्यवहितप्राक्त्वमेवेति । उत्तरार्द्धविकलस्य तस्मादित्युत्तरस्येत्यस्य प्रवृत्तेरितिभावः । मुमः सम्भवादिति । ईषदाढ्यम्भव इत्यादौ ईषत्पूर्वपदस्य खलो ऽनभिधानमिति ते प्राग्धातोरिति सूत्रस्थभाष्यस्वरसः । गत्यादीति । आदिनोपसर्गत्वम् । केचित्तु व्यवहिताश्चेति योगविभागात्तत्र छन्दसीत्यननुवृत्त्या लोके ऽपि क्वचिद् व्यवहितप्रयोगज्ञापनान्न दोषः । अत एव सञ्ज्ञानियमप्रयोगनियमपक्षयोर्न फलभेद इत्याहुः ॥

एकानुबन्धकपरिभाषयैव क्तिनो व्यावृत्तिसिद्धेरिति हरदत्तः। यत्तु वदन्ति। तितुत्रेत्यत्र क्तिन्क्तिचोः सामान्यग्रहणार्थश्चकारः। अन्यथैकानुबन्धकत्वात् अस्यैव ग्रहणं स्यान्न क्तिन इति। तन्न। तितुत्रेति सूत्रे ऽनुबन्धविशिष्टरूपानुच्चारणेनोक्तपरिभाषाया उक्तसंभवस्यैवाभावात्। एतेन तितुत्रेति सूत्रे एकानुबन्धकत्वात्क्तिचेव गृह्येत। ततश्च रोदितीति रुदितिः स्यात् इति शङ्का, कृतीत्यनुवृत्त्या तत्समाधानञ्चेति द्वयमपि प्रत्युक्तम्। भूतिरिति। यद्यपीह परत्वाच्छ्र्न्युकः किंतीत्येव इण्निषेधो न्याय्यः। तथापि नन्तिनन्त्योरावश्यकत्वात्फले विशेषाभावाच्च तितुत्रेत्युपन्यस्तम्। यन्तिरित्यादि। यम उपरमे। रम क्रीडायाम्। वनु याचने। तनु विस्तारे॥

अलङ्खल्वोः॥ पूजार्थमिति। ननु विकल्पार्थमस्तु। अलं रुदित्वाऽलं रोदनेनेति रूपद्वयं दृश्यते इति चेन्न। वासरूपन्यायेनैव सिद्धेः। ननु ल्युटि वासरूपन्यायो नास्ति। क्तल्युट्तुमुन्खलर्थेषु नेति सिद्धान्तादिति चेन्न। क्तल्युडादयो ऽपवादभूताः स्ववाध्यं नित्यं बाधन्त इति हि तस्यार्थः। इह तु ल्युटो ऽपवादः क्त्वेति वैषम्यात्। ननु प्रपादिषु कृत्यवचनेन स्त्र्यधिकारादूर्ध्वं वासरूपविधिर्नावश्यमस्तीति ज्ञापितमिति चेत् किं ततः। इह तदभ्युपगमे वाधकाभावात्। अलं कृत्वेति। अपात्रे न देयमित्यर्थः॥

उदीचाम॥ मेङः कृतात्वस्यायं निर्देशो नानुबन्धकृतमनेजन्तत्वमिति ज्ञापयति। तेन पुनरप्याङ्दायस्योऽप्यदाविति पर्युदासः सिध्यति। अपमित्येति। समासे ऽनञ्पूर्वे इति वक्ष्यमाणेन क्त्वो ल्यप्॥

परावरयोगे च॥ अप्राप्येति। दक्षिणदेशस्थानाङ्ग्रामप्राप्य विन्ध्यः।

---

इह तदभ्युपगमे इति। स्त्र्यधिकारादूर्ध्वं क्वचिद्वासरूपविधेरभाव एव ज्ञाप्यत इति भावः।

मेङ इति। डौ विशिष्टस्येत्यर्थः। इह व्यतिहारे तस्यैव वृत्तिर्न तु माङ इति भावः। समासे इति। अनञ्समासे इत्यर्थः॥

परावरेति। अवरशब्दो ऽत्र पूर्ववृत्तिवाची। परावरशब्दयोः सम्बन्धिशब्दत्वादवधिपेक्षं परावरत्वं गम्यते तयोः परावराभ्यां योगो बोध्यः। स च क्रियाद्वारकत्वेन साक्षाद्वा क्रियया सर्वोऽप्यत्र गृह्यते। तत्र यस्य यत्क्रियाद्वारकः सम्बन्धो यया क्रियया वा तद्वाचकात् क्त्वः आद्योदाहरणे स्थित इति शेषः। पूर्वत्वादिकञ्च तत्तत्पुरुषतत्तदवधिभेदेन भिन्नन्तदाह। दक्षिणदेशस्थानामिति।

गङ्गाप्राप्तिविरहविशिष्टदेशस्य इत्यर्थः। अत्र विन्ध्यात्परा गङ्गेति गम्यते। अतिक्रम्येति। पर्वतस्य परस्तादित्यर्थः। प्रागुक्ते एव विषये अयमपि प्रयोगः विशेषणविशेष्यसंसर्गास्तु भिद्यन्तइति स्पष्टमेव। इह त्रिसूत्र्यां विधेयस्य क्त्वाप्रत्ययस्य यद्यपि भावमात्रम् अर्थस्तथाऽपि द्वितीयक्रियायाः पूर्वकालत्वस्य चाभावाद् अलङ्खल्वोरिति परावरेति च लभ्यते। उदीचामिति तु पूर्वकालत्वाभावादिति विवेकः। एवञ्चेह मध्यमं विहाय सूत्रद्वये अधिकारलभ्यं धातुसंबन्धइत्येतन्न संबन्धनीयम्। कथञ्चित्संबन्धनीयमित्याग्रहे तु अपूर्वकालायैव त्रिसूत्रीत्यवधेयम्॥

समानकर्तृकयोः॥ इह धात्वधिकारेऽपि समानकर्तृकत्वं क्रिययोरेव संभवतीत्याशयेनाह। धात्वर्थयोरिति। निर्द्धारणे षष्ठी सप्तमी वा। पूर्वः कालो यस्यार्थस्य तस्मिन्नित्यर्थः। क्त्वा स्यादिति। स च भावे। अव्ययकृत इति वचनात्। तुमर्थ इत्यनुवृत्तेर्वा। न च सोऽपि भाव इति कथं लभ्यतामिति वाच्यम्। तुमर्थे सेसेनिति ज्ञापकेन तल्लाभात्। तथा हि। कर्त्तरि कृदिति कर्त्तरि प्रसक्तौ तुमर्थइत्युच्यते। तथा च तुमर्थो न

---

प्राप्तिविरहेति। प्राप्तिप्रागभावेत्यर्थः। स च सामानाधिकरण्यसबन्धेन पर्वतकर्तृकास्थितावन्वेति तदाह। विशिष्टदेशस्य इति। फलितमाह। अत्रेति। अत्र परभूतया नद्या ऽप्राप्त्येत्येनदुद्धारको योगः पर्वतस्य गम्यते। अतिक्रम्येत्युदाहरणे दक्षिणदेशस्थपुरुषकर्तृकपर्वतकर्मकप्राप्तिध्वंससमानाधिकरणा नदीकर्तृका स्थितिरित्यर्थस्तदाह। पर्वतस्येति। भिद्यन्त इति। उक्तरीत्येति भावः। साक्षात्क्रिययान्वये त्विदमुदाहरणम्। अवेमीत्यमिति विगृह्याविकशब्दादुत्पत्तिरिति। विग्रहो भिन्नत्वेन ज्ञानन्तदुत्तरकालिकी प्रत्ययकर्तृकोत्पत्तिरित्यर्थः। परावरत्वञ्चात्र ताहृशज्ञानोत्तरकालिकत्वात्प्रत्ययोत्पत्तेर्लोकव्यवहाराद्विवक्षितम्। असमानकर्तृकत्वात्समानकर्तृकयोरित्यस्य न प्राप्तिः। स्पष्टञ्चेदं खलयवेति सूत्रे कैयटे। द्वितीयक्रियाया इति। क्त्वाप्रकृत्यर्थक्रिययान्विताया इत्यर्थः। पूर्वकालत्वस्य चेति। परावरेति सूत्रविषये समानकर्तृकत्वस्य चाभावइत्यपि बोद्धयम्। कथञ्चिदिति। परावरेति सूत्रविषये स्थितिक्रियामादाय परावरद्वयाद्यविषये ऽपि अध्याहृतक्रियामादाय तत्सम्बन्धसम्भव इति भावः। परावरयोर्योगस्तत्तत्कारकक्रियायोगेनैवेति अस्त्येव धात्वर्थसंबन्ध इति बोद्धयम्॥

समानकर्तृकत्वमिति। समानशब्द एकवाची। नञिरूपितशक्तेर्भेद्राद्विशिष्टभेदेन साहश्यम्। एवञ्चैककर्तृकत्वं फलतीत्यन्ये। तुमर्थे इत्यनुवृत्तेर्वेति। तदनुवृत्त्या एषाकुर्मर्थत्वाभावे बोधिते विशेष्यार्थानिर्देशात्स्वार्थे,

कर्त्रेति स्थिते भाव एव पर्यवस्यति । अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्तीति न्यायात् । अयमिह निष्कर्षः । भावो ऽपि घञादाविव नेह सिद्धावस्थः किन्तु साध्यावस्थः स च धातुनैव लब्धः । क्त्वाप्रत्ययार्थभूता क्रिया च क्रियान्तरं प्रति विशेषणम् । धातुसंबन्धाधिकारात् । संसर्गश्चेह सामानाधिकरण्यमुत्तरकालत्वञ्च । तत्र संसर्गविशेषे तात्पर्यग्राहकाः क्त्वाणमुलादयः । अत्र समानकर्तृकयोरिति सूत्रांशेन सामानाधिकरण्यमुपनिबद्धम् । धातूपात्तव्यापाराश्रयस्य कर्तृतया तथा पर्यवसानात् । निर्द्धारणविभक्त्या च द्योत्यत्वं स्फुटीकृतम् । अन्यथा हि समाने कर्त्तरीत्येव ब्रूयात् । निर्द्धारणविभक्तिबलादेव पूर्वकालइत्यस्य बहुव्रीहित्वं निर्णीयते । निर्द्धारणस्य सजातीयविषयतानियमेन निर्द्धार्यमाणस्य क्रियात्वलाभात् । अत एव तत्र विद्यमानादिति व्याख्यातम् । एवञ्च कर्मधारयमाश्रित्य पूर्वस्मिन् काले वाच्ये क्त्वा भवतीति केषाञ्चिद् व्याख्यानमयुक्तमेव । किञ्च पूर्वकालो न वाच्यः । तद्विशेष्यकबोधापत्तेः । न चेष्टापत्तिः । क्रियाप्राधान्यविरहेण आभीक्ष्ण्यद्वित्वाभावापत्तेः । न च गुणीभूतक्रियामाश्रित्य तदिति वाच्यम् । पाचकादावतिप्रसङ्गात् । अपि च । एवं सति धातुसंबन्धइत्यस्य बाधापत्तिः । न च परम्परासम्बन्धस्तस्यार्थः । अधिकृतस्य तस्य यथाविध्यनुप्रयोग इत्यादिसूत्रद्वयविषये साक्षात्सम्बन्धपरतया दृष्टत्वात् । तथात्वे लाघवाच्च । अत एव वाक्यार्थस्थानापन्नसम्बन्ध एवेह द्योत्यो, न तु पदार्थभूत इति कर्मप्रवचनीयाद्वैषम्यम् । तत्र हि उपपदविभक्तेः षष्ठ्यपवादतया सम्बन्धस्य पदार्थत्वे सिद्धे "क्रियाया द्योतको नायं न संबन्धस्य वाचकः।नापि क्रियापदाक्षेपी संबन्धस्य तु भेदक" इति स्वीकृतम् । किं च पूर्वत्र क्त्वाप्रत्ययस्य कालो न वाच्य इति तदैकरूप्यायेहापि तथैवोचितम् । न हि सप्तमीनिर्देशमात्रेण

स च सम्भव एवेति भावः।किन्त्विति । अत एव भावे इत्युपेक्ष्य तुमर्थे इत्युक्तम्। संसर्गश्चेति । भोजनोत्तरकालिकं व्रजनमिति बोध इति भावः । विशेषणनिष्ठः । संसर्ग इति मते पूर्वकालः संसर्गः । भोजनपूर्वकालिकं व्रजनमिति बोध इत्यूह्यम । समानकर्तृकेति । स च कप्रत्ययदर्शनात् । बहुव्रीहित्वमिति । व्यापारश्चान्यपदार्थ इति भावः । तद्विशेष्यकेति । भोजनपूर्वकालकं व्रजनमिति रीत्येति भावः । सूत्रद्वयविषये इति । क्रियासमभिहारादिलोटीत्यर्थः । लाघवाच्चेति । पर-

प्राधान्यत्वं लभ्यते । उदो ऽनूर्ध्वकर्मणि । कर्त्तृस्थे चाशरीरे कर्मणि । प्रथने वावशब्दे । गोत्रचरणाच्छ्लाघात्याकारतदवेतेषु । इत्यादौ सहस्रशो व्यभिचारात् । तत्रानुशासनबलस्य तत्तद्विशेषावगतिराक्षेपाद्वेव भवत्यनन्यलभ्यत्वादिति यदि तर्हीहापि तुल्यमिति दिक् । द्वित्वमिति । ननु अमीषां ब्राह्मणानां पूर्वमानयेत्युक्ते मध्यमो नानीयते तथेहापि बहुक्रियासमभिव्याहारे मध्यमक्रियावाचकात् प्रत्ययो न स्यादिति चेन्नैवम् । इह हि आख्यातवाच्यक्रिया प्रधानम् । तां प्रति क्त्वान्तोपस्थिताः सर्वा एव विशेषणम् । न तु तासां परस्परं संबन्धः । गुणानां परार्थत्वादिति न्यायात् । अत एवानियतप्रयोगः स्नात्वा भुक्त्वा पीत्वा व्रजति, पीत्वा स्नात्वा भुक्त्वा व्रजतीत्यादि । स्वरतिसूतीति विकल्पे प्राप्ते आह । स्वरत्यादेरिति । स्कन्त्वेति । एकाच इति नेट् ॥

---

ऽपरथा च प्रत्ययार्थस्येतरत्रान्वयाय सम्बन्धान्तरकल्पनागौरवमिति भावः । यद्यपि प्रत्ययार्थस्य प्राधान्यमिति न नियमः । आख्याते व्यभिचारात् । तथा ऽपि कर्मधारयत्वे पूर्वकाले इत्यस्य वैयर्थ्यं भूत इत्येव सिद्धेः । भूतत्वञ्च समभिव्याहृतक्रियापेक्षन्तच पूर्वकालवद् इति दिक्॥ परे तु पूर्वकाले इति तद्गुणसंविज्ञानो बहुव्रीहिः । पूर्वकालविशिष्टक्रियावाचकाद्धातोरित्यर्थः । एवञ्च पूर्वकालप्रकारको बोधः । वर्त्तमानकालादेर्लडादिवत्तस्य क्त्वा द्योतकः । अत एव पूर्वं भुङ्क्ते पश्चाद् व्रजतीत्यत्र न क्त्वा । पूर्वशब्देन क्रियागतपूर्वकालस्योक्ततया धातोः पूर्वकालविशिष्टक्रियावृत्तित्वाभावात् । पूर्वकाले द्योत्ये हि क्त्वा, न तु विषये इति भाष्यकैयटयोः स्पष्टम । उक्तार्थनामिति न्यायस्य तु नात्र विषयः । तस्यानित्यत्वात् । एतदेव ध्वनयता भाष्यकृतोक्तम । इह कस्मान्न भवति आस्यते भोक्तुमिति । अन्यथा तत्र तुमुना तादर्थ्यबोधद्वारा पूर्वकालत्वस्याऽऽस्थाने द्योतितत्वात्तदप्रवृत्तौ तदसङ्गतिः स्पष्टैव । उक्तञ्च कैयटेन आसेः पूर्वकालत्वाद्भावस्य च प्रतिपाद्यत्वाद्दामित्वा भोक्तुमिति प्राप्नोतीति भाव इति । वासरूपन्यायेन लडिति समाहितमित्यन्यत् । क्त्वा भावे, पूर्वकालविशिष्टक्रियावाचकत्वन्तुमुनः समभिव्याहारादिति तदाशयः । न हि तत्रासनोत्तरकालिकं भोजनमिति बोधः कस्यापि सम्मतः । भोजनफलकं पूर्वकालमासनमिति बोधस्तु भाष्यसंमतः । अन्येभ्यो भोक्तृभ्यः पूर्वं भुक्त्वा ऽन्येभ्यो व्रजितृभ्यो ऽनन्तरं व्रजतीत्यर्थे तु पूर्वं भुक्त्वा पश्चाद् व्रजतीत्युचितमेवेत्याहुः। समानकर्त्तृकत्वन्तु न क्त्वार्थः सामानाधिकरण्यसंसर्गेणान्वये तस्यार्थाल्लाभेनानन्यलभ्यत्वाभावात्तथा भुक्त्वैव तृप्तो न पीत्वापीत्युत्तिष्ठतीत्यादौ क्वचिद् व्याप्यतादिभानेऽपि मानान्तरगम्यत्वान्न तस्य क्त्वाद्योत्यता । इति न्यायादिति । यत्तु अनेन न्यायेनाख्यातोपस्थितक्रियाविशेषणत्वे

मृड मृद ॥ मृड सुखने । मृद क्षोदे । गुध रोषे च । कुष निष्कर्षे क्लिश हिंसायां दिवादिः । क्लिशू विबाधने क्र्यादिः । वद व्यक्तायां वाचि । वस निवासे । उषित्वेति । वसतिक्षुधोरिडिति । यजादित्वात्संप्रसारणम् । शासिवसीति षः ॥

नोपधात् ॥ अन्तग्रहणं स्पष्टार्थम् । कोथित्वा रेफित्वेति । कुथ पूतीभावे । रिफ कत्थनयुद्धनिन्दाहिंसादानेषु । इह रलो व्युपधादिति विकल्पो ऽपि न भवति । नोपधग्रहणसामर्थ्यात् । लुञ्चित्वेति । तञ्च अपनयने । ऋतित्वेति । ऋतिः सौत्रो घृणार्थः । तस्यार्द्धधातुकविषये इयङो विकल्पनात् तदभावे कित्त्वमनेन विकल्प्यते ॥

तृषिमृषि ॥ जितृषा पिपासायाम् । मृष तितिक्षायाम् । कृश तनूकरणे । काश्यपग्रहणं पूजार्थं वेति हि वर्त्तते । उदितो वेति विकल्पे प्राप्ते आह । अञ्चेर्गिन । आञ्चत्वेति । न क्त्वा सेडिति कित्त्वाभावान्नलोपो न । एवञ्चेह, नाञ्चेः पूजायामिति नलोपो नेति प्रमादोक्तिर्निर्विषया ॥

जृव्रश्च्योः ॥ जृ इत्यस्मात् श्र्युकः कितीति निषेधे प्राप्ते व्रश्चेरुदित्त्वाद्विकल्पे प्राप्ते वचनम् । खात्वा खनित्वेति । उदितो वेति वेट् । जग्ध्वेति । झगे झरीति पाक्षिको भलोपः ॥

समासे ऽनञ् ॥ नञ्पदं शमव्ययं यत्तत्पूर्वपदं यस्येति व्याचष्टे । अव्ययेति । प्रकृत्येति । प्रशब्दः क्त्वाप्रकृत्यर्थगतं प्रकर्षं द्योतयन् कुगतिप्रादयः इति वचनान्तेन नित्यं समस्यते ॥

---

प्रत्यायं माधुरिति । तत्र तृज्वत्क्रोष्टुरिति सूत्रस्थ आहत्य तृच्चो यच्छास्त्रमिति भाष्यप्रयोगे शास्त्रशब्दप्रतिपाद्यशास्त्रकरणकशासनक्रियापेक्षपौर्वकाल्याश्रयः प्रत्यय इति कैयटोक्तेः । अत एव भुक्त्वा गत इत्यादिप्रयोगोपपत्तिः । क्रियान्तरान्तर्गतक्रियायां नान्वय इत्यत्र मूलतात्पर्यमन्त्युक्तं भाष्ये ऽनन्त्यस्येति वक्तव्यम् । न वक्तव्यं सर्वेषामत्र व्रजिक्रियां प्रति पौर्वकाल्यमत एवानियतः प्रयोग इति । न च ऋफऋम्फेत्यवाद्यव्यावृत्त्यर्थं नोपधग्रहणमिति वाच्यमस्मिन् कृते ऽपि न क्त्वेति निषेधनाकित्त्वस्यावाधेन दुर्वारतया द्वितीयस्थानेन विकल्पेन ऋफित्वेत्यस्य दुर्वारतया च विशेषाभावात् । न च चुरादीनामनित्यण्यन्ततया णिजभावे पृथक् प्रक्षेप इति व्यावृत्त्या चरितार्थमिति वाच्यम् । सर्वेषामनित्यण्यन्तत्वे मानाभावात् ।

तत्पूर्वपदं यस्येति । क्त्वान्तोत्तरपदकस्येत्यर्थः । तेन परमकृत्वेत्यादौ

षत्वतुकोरसिद्धः ॥ को ऽसिचाविति । एङः पदान्तादतीति पूर्वरूपमेकादेशः । तस्यान्तादिवच्चेति परादिवद्भावे ओसिचाविति पदम् । तेन सकारस्यापदादितया सात्पदाद्योरिति निषेधाभावात् षत्वं प्राप्तम् । एकादेशस्यासिद्धत्वे अकारेण व्यवधानाद् इणः परत्वाभावान्न भवति । प्रासङ्गिकं षत्वमुदाहृत्य प्रकृतं ल्यपि कार्यमुदाहरति । अधीत्येति । विधायेति । दधातेर्हिर्न । प्रदाय । दो दद्घोरिति न । प्रखन्य । जनसनेत्यात्वं न । प्रस्थाय । द्यतिस्यतीतीत्वन्न । प्रक्रम्य । क्रमश्च क्त्वीति दीर्घो न । आपृच्छ्य । प्रदीव्य । च्छ्वोः शूठौ न । इडभावस्तु प्रखन्य प्रदीव्येत्यादावेव बोद्धव्यः ॥

न ल्यपि ॥ कथन्तर्हि "निपीय यस्ये"ति । पीङ् पाने दिवादिरित्यदोषः । इह प्रशाय प्रस्थायेत्यत्र शाच्छोरन्यतरस्यामिति प्राप्तस्येत्वस्याप्यभावो बोद्धव्यः । विगणय्येति । नन्विह णौ कृतस्याल्लोपस्य पूर्वस्मादपि विधौ स्थानिवद्भावाल्लघुपूर्वात्परत्वं नास्ति । न चारम्भसामर्थ्यम् । अनुगमय्येत्यादौ मित्सु चरितार्थत्वात् । अत्रोच्यते । पूर्वस्माद्विधौ स्थानिवत्त्वं नित्यं, निष्ठायां सेटीति लिङ्गात् । तथा हि । तत्र सेटीति पदं न तावदनिड्भ्यो वृत्त्यर्थम् । णिजन्तात्तदसंभवात् । ननु सञ्ज्ञपितः पशुरित्यत्र यस्य विभाषेतीण्निषेधे संभवत्येवानिट्त्वम् । सनीवन्तेति विकल्पितेट्कत्वादिति चेन्न । यस्य विभाषेत्यत्र एकाच इत्यनुवृत्तेः । अन्यथा दरिद्रित इतीण्न स्यात् ॥ तस्मात्कालावधारणार्थं सेड्ग्रहणम् । इटि कृते णिलोपो, न तु ततः प्रागिति । अन्यथा कारितमित्यादौ णिलोपे क्तस्य एकाच उपदेश इतीण्निषेधः स्यादिति । यदि तु पूर्वस्माद्विधौ स्थानिवत्त्वन्तर्हि णिचा व्यवधानाद् निषेधप्राप्तिरेव नास्ति इति सेटीत्यनर्थकं सत्त-

स्नाभ्याकालक इत्यादौ मयूरव्यंसकादिसमासे च न दोष इति भावः । अनञ इत्येव सिद्धे पूर्वग्रहणं व्यर्थमिति ध्वनितमनञो वा परस्येति भाष्येण ।

क्रमश्च क्त्वीति । अनुनासिकस्येत्यस्याप्युपलक्षणमिदम् ।

इत्वस्याप्यभाव इति । तादिकित्त्वाभावेन ल्यपि कृते तदप्राप्तेः । ल्यपः पूर्वमपि न । अन्तरङ्गानपीति न्यायात् । आरम्भसामर्थ्यमिति । तेन च स्थानिवद्भावकृतव्यवधाने ऽपि प्रवृत्तिरिति भावः । दरिद्रित इति । तन्निपातिदरिद्रा-

स्थानित्वमिति ज्ञापयति इति स्थितम् । एतच्च वसेकाजिति सूत्रे कैयटेना-नितेरन्त इति सूत्रे हरदत्तेन च स्पष्टमेवोक्तम् । माधवस्तु परिहृत्य गत इत्यत्र आभीयत्वेनासिद्धतामाशङ्क्य ल्याश्रयत्वेन परिहृत्य पूर्वस्मादपीति स्थानिवत्त्वमाशङ्क्य प्रवेभिद्य प्रस्तनदशेत्यादिभाष्योदाहरणबलेन तद-भावमाह । अथवा पूर्वस्मादपीति पञ्चमीसमासपक्षस्त्यज्यतां, तदीयोदाहर-णानां वेभिदिता माथितिकः अपीपचामित्येषां प्रकारान्तरेणैव निर्वाहस्य प्रागेवोक्तत्वाच्छब्दकौस्तुभे प्रपञ्चितत्वाच्चेति दिक् । प्रणमय्येति । मितां ह्रस्वः । प्रवेभिद्य्येति । भिदेर्यङन्तात्ण्यन्तात्णिचि अल्लोपे यस्य हल इति य-लोपः । न च ह्रस्वयलोपाल्लोपानामाभीयत्वेनासिद्धत्वाल्लघुपूर्वात्परो णि-र्नास्तीति वाच्यम् । ल्याश्रयत्वात् । ह्रस्वादयो हि णौ, अयादेशस्तु ल्य-पि परत इति ॥

विभाषापः ॥ आप्नोतेरिति । इङादेशस्य तु लाक्षणिकत्वान्नेह ग्रहणमिति भावः । प्राप्येति । एतेन "अयमयोगिवधूवधपातकैर्भ्रमिमवाप्य दिवः खलु पात्यते" इति व्याख्यातम् । अवाप्येत्यस्यावापय्येत्यर्थात् । एतेन तत्रान्तर्भावितण्यर्थतेति क्लेशमनुभवन्तः परास्ताः । कथमिति । ल्य-बादेशस्य स्थानिभूतः क्त्वाप्रत्ययो ऽत्र दुर्लभः । तद्विधौ पूर्वकालत्वयुक्तेः । न चेह तदस्ति पूर्वं ह्यसौ स्वपिति पश्चाद् व्यादत्ते । तद्वेव संमीलयति इति प्रश्नः । समाधत्ते । व्यादानेति । एतेन ईश्वरः सर्वं व्याप्य वर्त्तते । ज्ञात्वा तिष्ठतीत्याद्यपि व्याख्यातम् । श्रीशैलशिखरं दृष्ट्वा पुनर्जन्म न विद्यत इ-त्यादौ समानकर्तृकतानिर्वाहार्थं स्थितस्येत्यादि यथासंभवमध्याहार्यम् । पार्थ्यपायमिति । आतो युक् । वा दीर्घ इति । गमेर्ण्यन्तात्णमुलि मितां ह्रस्व इति ह्रस्वे च कृते वा दीर्घ इत्यर्थः । एयन्तस्यापीति । यत्तु माध्वा एयन्त-

तीति विकल्पितेट्त्वादिति भावः ॥ भाष्योदाहरणबलेनेति । एकाच उपदेश इत्यत्र विहितविशेषणपक्षे सेटीति चिन्त्यप्रयोजनमिति तद्भावः । अथ वेत्यादि । अत्र परस्मिन्निति सूत्रस्थकैयटानुसारेणोक्तं, वस्तुतस्तु चिन्त्यमिति प्रागेव निवे-दितम् । दिगिति । द्विगर्थस्तु लघुः पूर्वो यस्मादिति बहुव्रीहावत्र व्यवधिमतोः साजात्येन वर्णस्यान्यपदार्थतया वर्णजातिग्रहणान्न दोषः । न चैवं प्रचिकीर्ष्ये-त्यादौ दोषः । जातिग्रहणेऽनेकग्रहणेऽपि वर्णद्वयस्यैव ग्रहणात् । अत एव

जागर्त्तेश्चिण्णमुलो वा वृद्धिरिति मतमुपन्यस्तम् । तद्पाणिनीयमिति भावः ॥

न यदि ॥ अनाकाङ्क्ष इति पचाद्यजन्तं नञ्समासः । तद्दर्शयति । नाकाङ्क्षत चेदिति । इहेति । नन्वनन्तरस्येति न्यायाद्यणमुल् मा भूत्, क्त्वा तु सूत्रान्तरेण स्यादेवेति चेन्न । पूर्वकाले यत्प्राप्नोति तन्नेति व्याख्यानेन प्रकरणापेक्षस्यैव प्रतिषेधाभ्युपगमात् ॥

विभाषाऽग्रेप्रथमपूर्वेषु ॥ यद्यप्यग्रशब्दो देशविशेषवचनो ऽप्यस्ति प्रभोरग्रे भुङ्क्ते इति तथापीह कालविशेषवाच्येव गृह्यते प्रथमशब्दसाहचर्यात् । अग्रे इति सप्तम्यन्तस्यानुकरणम् । अत एव विभक्तेर्लुग् न कृतः । अस्यवामीयमितिवत् । अग्रेभोजमिति । अन्येभ्यो भोक्तृभ्य पूर्वं भुक्त्वेत्यर्थः । यदि तु अग्रेप्रभृतीनिमन्त्रणाद्विक्रियापेक्षं भुज्यादेः पूर्वकालत्वमुच्येत तदा क्त्वाणमुलौ न स्यातामेव ताभ्यां द्योत्यस्य पूर्वकालत्वस्य अग्रेप्रभृतिरेव निर्णीतत्वात् । स्वादुमीत्यर्थग्रहणं व्याख्यानात् तदाह । स्वादुर्थेष्वेति । मान्तत्वमिति । ननु मास्तु णमुल्, खमुञेवानुवर्त्ततामू । अरुर्द्विषदिति मुम् भविष्यत्येवञ्च मान्तत्वनिपातनं व्यर्थमिति चेद् मैवम् । तथा हि सति ख्यन्तस्य मुम् न स्यात् । अनव्ययस्येति वचनात् । ततश्च स्वादुङ्कारमित्यत्र च्वौ चेति दीर्घः स्यात् । संपन्नादिषु अस्य च्वाविती त्वं स्यात् । किंच स्त्रियां वोतो गुणवचनाद्विति ङीषू स्यात् । ततश्च स्वाद्वीङ्कारमिति प्रसज्येत । मुमः स्वरूपेण विधाने ऽप्येते दोषाः । अतः स्वादुमीति रूपं

सनिमीमेत्युत्तरं, दम्भ इच, आपृज्ञप्यृधामिति दम्भेरपीत्वाभ्यां नलोपसंयोगादिलोपाभ्यां सिद्धे दम्भ इच्चेति इत्वविधानञ्चरितार्थम् । इत्वाभावे हि सनिमीमेति वर्णद्वयलक्ष्येन किस्वामापत्तेः । अइउ अयोहित्यादावपि द्वयोरेव प्रगृह्यत्वापत्तौ आकरनात्पर्यम् ।

अन्येभ्यो भोक्तृभ्य इति । साधनपौर्वकालविषयाणामेव प्राद्दीनाङ्कृहणमस्त्वेति समानकर्तृकयोरिति सूत्रे भाष्यकैयटाभ्यामुक्तत्वादिति भावः । णमुलिति तत्सूत्रविहितक्त्वोप्युपलक्षणम् । स्वादुङ्कारमिति । च्वितीति ह्रस्वे मुमिति भावः । एते दोषा इति । ङीपि स्वाद्वीङ्कारमिति । प्रसज्येतेति शेषः । न च प्रत्ययसंनियोगेन मुमो विधानादन्तरङ्गत्वेन पूर्वं प्रवृत्तौ नैते दोषा इति वाच्यम् । सुबन्तस्योपपदत्वेन प्रियकुलसनादिषु ततः प्रवर्त्तते ऽसौ विभक्त्यन्त इति भा-

